श्री जैन-आत्मानन्द-ग्रन्थरत्नमाला-पञ्चसप्ततितमं रत्नम् (७५)

बृहत्तपागच्छालङ्कारहारोपम-श्रीमन्मुनिसुन्दरसूरिविरचितं

# चन्द्रवीरशुभा-धनधर्म-सिद्धदत्तकपिल-सुमुखनृपादिमित्रचतुष्क- कथाचतुष्टयम् ।

सपादकः—

मुनिशिरोमणि-प्रवर्तकश्रीमत्कान्तिविजयशिष्याणु-मुनिचतुरविजयः ।



...हंसविजयमुनिपुङ्गवशिष्यमुनिदोलतविजयोपदिष्ट-प्रभासपाटण-वास्तव्यश्रेष्ठि उत्तमचन्द्र-हीरजी-हर्षचन्द्र-मकनजी इत्येतयोर्द्रव्यसाहाय्येन

प्रकाशयित्री—भावनगरस्था-श्रीजैन-आत्मानन्द-सभा.

वीरसंवत् २४४६ | आत्मसंवत् २७. | विक्रमसंवत् १९७९

Printed by Gulabchand Lallubhai Shah at the Anand Printing Press-BHAVNAGAR

Published by Vallabhdas Tribhuvandas Gandhi, Secretary Jain Atmanand Sabha-BHAVNAGAR.

॥ अर्हम् ॥

॥ न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरीश्वरेभ्यो नमः ॥

श्रीमन्मुनिसुन्दरसूरिविरचिता

# श्रावकधर्मप्रभावे चन्द्र-वीरशुभा-कथा ।

जयश्रीप्राप्तितो द्वेधा रिपूणां स्युः सदा सुखाः । यद्धर्मविध्रया भव्यास्तं श्रीवीरं जिनं स्तुवे ॥ १ ॥
मालाकारा इव प्राप्तैर्यस्याः काव्यसुमैर्बुधाः । ग्रन्थन्ति ग्रन्थमालां तां ब्राह्मीं कल्पलतां भजे ॥ २ ॥
भारती संयमश्रीश्च चक्रे येष्वेव भारती । वन्दे भाग्यनिधींस्ताञ् श्रीदेवसुन्दरसद्गुरून् ॥ ३ ॥
येभ्यो ज्ञानरसैरात्तैः शिष्याब्दाः प्रीणते भुवम् । श्रीज्ञानसागरान् सूरींस्तानस्ताघगुणान् स्तुवे ॥ ४ ॥
सोमसुन्दरसूरिन्द्रान् श्रीमतो नौमि तान् गुरून् । तारायन्तेऽन्यतीर्थ्या यज्ज्ञानभानूदयेऽधुना ॥ ५ ॥
ऐहिकामुष्मिकात्यन्तश्रेयःश्रीसस्पृहैर्बुधैः । जैने धर्मे सदा यत्नः कार्यः कार्यार्थवेदिभिः ॥ ६ ॥
ज्ञानदर्शनचारित्ररत्नत्रयमयश्च सः । ज्ञानं बोधस्तु तत्त्वानां श्रद्धानं स्याच्च दर्शनम् ॥ ७ ॥
चारित्रं चास्रवत्यागो देशतः सर्वतोऽपि वा । प्रधानं दर्शनं चैषु तद्विना येन नेतरे ॥ ८ ॥

दर्शने दृढचित्तस्तज्ज्ञानवान् देशतोऽपि यः । विरतिं भजते स स्यादुच्चैः श्रेयःपदं सुधीः ॥ ९ ॥

तस्य विघ्नाः क्षयं यान्ति सुराः स्युर्वशवर्तिनः । चन्द्रवीरशुभाज्ञातात्तं भजन्तीष्टसंपदः ॥ १० ॥ तथाहि १ ॥

अथवा । ऐहिकामु० ६ ॥ ज्ञानदर्शन० ॥ ७ ॥ चारित्रं चा० ८ ॥ दर्शने दृढ० ९ ॥ धर्मस्यास्य जिनो मूलं पूजा कार्याऽस्य तत्त्रिधा । अङ्गाग्रभावभेदेन प्रधानं तत्र चान्तिमा ॥ १० ॥ यदुक्तम्—

" सयं पमज्जणे पुन्नं, सहस्सं च विलेवणे । सयसाहस्सिआ माला, अणंतं गीयवाइए ॥ ११ ॥ "

कर्तुरेवोपकाराय प्रायोऽर्चा ह्यादिमा द्विधा । गीतनाट्यादिभावार्चा स्यात्तु मिथ्यादृशामपि ॥ १२ ॥ जिनदत्तकृता साऽभूद्यथा चन्द्रस्य बोधये । बुध्यन्ते केऽपि चैत्यादौ प्राप्ता यत्कौतुकादपि ॥ १३ ॥ तथाहि २ ॥

अथवा । ऐहि० ॥ ६ ॥ ज्ञान० ॥ ७ ॥ चारित्रं० ॥ ८ ॥ दर्शने० ॥ ९ ॥ धर्मस्यास्य० ॥ १० ॥ यदुक्तम् ॥ सयं पमज्जणे० ॥११॥ कर्तुरे० ॥१२॥ भावपूजाप्रवृत्त्यै तन्नीचेभ्योऽपि प्रदीयते । चैत्ये दानं नटेभ्योऽभूत् चन्द्रस्येष्टफलाय यत् ॥१३॥ तथाहि ३ ॥

अथवा । ऐहिकामु० ॥ ६ ॥ ज्ञानदर्शन०॥ ७ ॥ चारित्रं चास्व०॥ ८ ॥ दर्शने दृढ०॥९॥ स चाधिकारिणा धर्मः साध्योऽयं तु तदर्थिकः । समर्थश्चागमप्रोक्ताऽक्षुद्रत्वादिगुणान्वितः ॥१०॥ अर्थी धर्मान्वेषी, स समर्थो यः पुनः सृजन् धर्मम् । न बिभेति मातृपितृ-गुरु-पत्यादिभ्योऽन्यधर्मेभ्यः ॥ ११ ॥ यदुक्तम्—

" होइ समत्थो धम्मं, कुणमाणो जो न बीहइ परेसिं । माइपिइसामिगुरुमाइयाण धम्माउ भिन्नाणं ॥ १२ ॥ "

" आगमगदितगुणः स्यादक्षुद्रो रूपवान् प्रकृतिसौम्यः । सत्पक्षसदाक्षिण्यो, दक्षो लोकप्रियो विनयी ॥ १३ ॥ " इत्यादि ॥

एषु समर्थो मुख्यो, धर्मस्याङ्गं परं हि सामर्थ्यम् । तेन विनाऽन्ये हि गुणाः, सन्तोऽपि न साधकाः प्रायः ॥ १४ ॥ सामर्थ्याद्धर्मकृतेश्चन्द्र इवाप्नोति वाञ्छितं पुरुषः । वीरशुभेव च नारी, तारयति स्वं परं चापि ॥ १५ ॥ तथाहि ४ ॥

अथवा । ऐहि०॥ ६ ॥ ज्ञान० ॥ ७ ॥ चारि० ॥८॥ दर्श०॥ ९ ॥संबन्धोऽपि हि जैनैः स्याच्चन्द्रस्येव हितावहः । तथाहि ५ ॥

अथवा । असन्तं रोपयन् धर्मं कुलं चन्द्र इवोद्धरेत् ॥ १० ॥ तथाहि ६ ॥

अथवा । ऐहिकामुष्मि० ॥ ६ ॥ ज्ञानदर्शन० ॥ ७ ॥ चारित्रं चास्र० ॥ ८ ॥ दर्शने दृढ० ॥ ९ ॥ कामाद्यर्थमपि प्राप्तो मुखे धर्मो जिनोदितः । परिणामहिताय स्याच्चन्द्रस्येवेष्टदानतः ॥ १० ॥ तथाहि ७ ॥

अथवा । ऐहिकामुष्मि० ॥ ६ ॥ ज्ञानदर्शन० ॥ ७ ॥ चारित्रं चास्र० ॥ ८ ॥ दर्शने दृढ० ॥ ९ ॥ संबन्धमपि नो कुर्यात् श्राद्धो वैधर्मिकैः सह । आर्हतायैव चन्द्राय जिनदत्तो ददौ सुताम् ॥१०॥ तथाहि ८ ॥

अथवा । ऐहिकामुष्मि० ॥ ६ ॥ ज्ञानदर्शन० ॥ ७ ॥ चारित्रं चास्र० ॥ ८ ॥ दर्शने दृढ० ॥ ९ ॥ विदेशेऽप्यसहायोऽपि जिनभक्त्यादिपुण्यतः । चन्द्रवत्स्वं प्रतिज्ञातं साधयन् प्राप्नुयात् श्रियः ॥ १० ॥ तथाहि ९ ॥

अथवा । ऐहिकामुष्मि० ॥ ६ ॥ ज्ञानदर्शन० ॥ ७ ॥ चारित्रं चास्र० ॥ ८ ॥ दर्शने दृढ० ॥ ९ ॥ अबलाऽप्यस्वतन्त्राऽपि धर्मं स्वपरसङ्कटे । कुर्वाणा काऽपि योषाऽपि श्लाघ्या वीरशुभा यथा ॥ १० ॥ तथाहि १० ॥

अथवा । ऐहिकामुष्मि० ॥ ६ ॥ ज्ञानदर्शन० ॥ ७ ॥ चारित्रं चास्र० ॥ ८ ॥ दर्शने दृढ० ॥ ९ ॥ द्रढिमा जिनधर्मे स्याद्यस्य भक्तिस्तथाऽर्हति । कर्तृभ्यो गीतनाट्यादेश्चैत्ये दद्याच्च यः सुधीः ॥१०॥ कौतुकादपि यश्चैत्ये समायात्यल्पकर्मकः । इहापि तस्य

जायन्ते चन्द्रस्येवेप्सिताः श्रियः ॥ ११ ॥ एवमेकादशपीठप्रकारैः श्लोकाः २८ ॥

एषु पीठप्रकारेषु श्रित्वा कञ्चिद्यथासभम् । चन्द्रवीरशुभावृत्तमुच्यतेऽघं च मुच्यते ॥ २९ ॥ तथाहि—

अयोध्याऽस्ति पुरी रम्या भरतक्षेत्रभूषणा । सारैर्धर्मार्थकामानां त्रिलोक्या इव निर्मिता ॥ १ ॥ साक्षात्तत्फलमालोक्य यस्यां पुण्यं क्रियाज्जनः । इति प्रतिकृतिः स्वर्गस्येव या विधिना कृता ॥ २ ॥ जितशत्रुनृपस्तत्र समभूत्सान्वयाभिधः । प्रतापस्पर्द्धयेवा-गुर्यस्य दूरं द्विषो दिशः ॥ ३ ॥ वहिरन्तः स्मरस्येव तस्य जज्ञे रतिः प्रिया । निजान्निर्जित्य या रूपादनैषीदरतिं सुरीः ॥ ४ ॥ श्रेष्ठी श्रेष्ठगुणोऽथात्र जिनदत्तोऽभवत्पुरे । जीवाजीवादितत्त्वज्ञः श्राद्धः सङ्घशिरोमणिः ॥ ५ ॥ ऋद्धिं तस्य गृहे वीक्ष्य रङ्कीयति धनेश्वरम् । चातुर्यं तस्य चालोक्य मूर्खीयति गुरुं सुधीः ॥ ६ ॥ तस्य वीरशुभा पुत्री जज्ञे प्रज्ञाऽस्तशारदा । धर्मरङ्गमरालो न यस्यास्त-त्याज मानसम् ॥ ७ ॥ रूपेण न्यक्कृता लक्ष्मीर्यया ऽभिभवतापिता । अद्यापि न त्यजत्येव संसर्गं जलपद्मयोः ॥ ८ ॥ वाल्यादपि चतुःषष्टिं कलाः साऽध्यैष्ट भाग्यभूः । सद्धर्मकलया चासां सौभाग्यानन्त्यमातनोत् ॥ ९ ॥ षड्विधावश्यकोद्युक्ता प्रत्यहं त्रिर्जिना-र्चिका । दक्षा प्रवचने वाल्येऽप्यभूद्धर्ममयीव सा ॥ १० ॥ तदा त्वखिलनारीभ्यो रूपसौन्दर्यतोऽधिका । देवीभ्यो भिद्यते स्मैषा निमेषैरेव नेत्रयोः ॥ ११ ॥ जज्ञे पुर्यामथात्रैव श्रेष्ठी सागरनामकः । पास्पर्धत्सागरेणात्मस्वर्णऋद्ध्या महालयः ॥ १२ ॥ राजमान्यो-ऽग्रणीर्ज्ञातौ ख्यातो दानादिभिर्गुणैः । महापरिकरः सोऽभात् परं मिथ्यादृगादिमः ॥ १३ ॥ कुलोद्द्योतकरोऽस्याभूत्तनयो विनयो-ज्ज्वलः । कामो दर्शयते न स्वं रूपं यद्रूपधिक्कृतम् ॥१४॥ कलावृद्धासमर्ति नित्यं दोषासङ्गं त्यजन्नधात् । तथाऽपि चन्द्र इत्येष ख्यातोऽभूत्सा-गरात्मजः ॥ १५ ॥ अन्यदा पुण्यतारुण्यागण्यलावण्यमन्दिरम् । स वयस्यैः समं क्रीडन् स्वेच्छया नगरे भ्रमन् ॥ १६ ॥ जिन-

दत्तगृहोद्याने समासन्ने व्रजन्मुदा । चैत्यमैक्षिष्ट भव्यानां पुण्यराशिमिवोज्ज्वलम् ॥ १७ ॥ युग्मम् ॥ तस्मिन् मनोहरे नृत्यन्नटीपेटक-सङ्कटे । सोऽन्तर्गीतरवाकृष्टश्रोत्रः कौतुकतोऽविशत् ॥ १८ ॥ गीतनाट्यादिभिश्चित्तं रमयित्वा क्षणं ततः । तच्चैत्यसुषमाकृष्टनेत्रो गर्भगृहेऽगमत् ॥ १९ ॥ अथ वीरशुभा बाला जिनार्चार्थमिहागता । जिनेन्द्रान् विधिनाभ्यर्च्य विधित्वा चैत्यवन्दनाम् ॥ २० ॥ क्षण-मर्हन्मुखे न्यस्तदृष्टिर्ध्यानेन निश्चला । कायोत्सर्गेण तस्थौ सा मन्त्रस्तब्धेव देवता ॥२१॥ युग्मम् ॥ वी क्ष्य चन्द्रोऽथ तां देवीप्रतिमा-भ्रान्तितोऽनमत् । अहो ! विज्ञानसीमेयं शिल्पिनामिति संस्तुवन् ॥ २२ ॥ ततः प्रहसिते मित्रैः सोऽवग् हसथ किन्तु भोः ! । देवताप्रतिमाः सर्वा वन्दनीया हि धीमताम् ॥ २३ ॥ देवताप्रतिमा नेयं जिनदत्तसुता त्वियम् । आकृतिः प्रकृतिं वक्ति यस्याः सर्व-गुणात्मिकाम् ॥ २४ ॥ इति मित्रगिरं श्रुत्वा ह्रीणः सम्यक् स विस्मितः । तत्सौन्दर्यश्रियं पश्यन् सानुरागः क्षणादभूत् ॥ २५ ॥ अहो ! रूपमहो ! कान्तिरहो ! लवणिमाऽद्भुतः । अहो ! सौभाग्यसीमाऽहो ! सृष्टिः काऽपि नवा स्त्रियाः ॥ २६ ॥ यथा मन्ये शिशुत्वेऽपि भक्तिरस्याः स्वदैवते । तथा मन्ये परं भाग्यं तद्विना हि न साऽङ्गिनाम् ॥२७॥ विचिन्त्येति स नेपथ्यात्कन्यात्वमवबुध्य च । न निवर्तयितुं तस्याः साभिलाषोऽशकद् दृशौ ॥ २८ ॥ अर्थतो विशेषकम् ॥ अनया न समं भोगाश्चेत्सुरैः काम्यमानया । निष्फलं जीवितं तन्मे धनं रूपं च यौवनम् ॥ २९ ॥ इति चिन्तातुरो मित्रैरिङ्गिताकूतवेदिभिः । सहास्यमूचे बन्धो ! किमेतां परिणिनीषसि ॥ ३० ॥ तनया श्रावकस्यैषा नैतामश्रावकाय ते । जिनदत्तो ददातीति मानुरङ्क्थाः सुदुर्लभे ॥ ३१ ॥ यतः—

" साहीणेसु न रज्जसि, दुल्लहलंभेसु वहसि अणुरायं । हरिनाहिकमलकंखिर !, रे भसल ! सुदुक्करं जियसि ॥ १ ॥"

चन्द्रोऽवादीत्सखायश्चेन्नोपयच्छे वशामिमाम् । भजेऽग्निं तद्व्रतं वापि प्रतिज्ञा मेऽस्त्वियं ध्रुवा ॥ ३२ ॥ ज्ञातचिन्तैस्ततो मित्रै-

वार्तान्तरविनोदनात् । गृहं निन्येऽङ्केनैष कथञ्चिन्मन्मथार्दितः ॥३३॥ कायोत्सर्गं प्रपूर्याथ गृहं वीरशुभाप्यगात् । तस्मिन् यूनि मना-
ग् भावं दधती स्मरसुन्दरे ॥ ३४ ॥ अथ वीरशुभाप्राप्तिचिन्तातापभरार्दितः । न कुत्रापि रतिं प्राप त्रिद्धश्चन्द्रः स्मरेषुभिः ॥ ३५ ॥
पद्मशय्यां चितां मेने चन्दनं दहनं च सः । चन्द्रकान्तीश्च भल्लीर्यद्विपरीतक्रमः स्मरः ॥ ३६ ॥ स्नानाङ्गरागभोगेभ्यो विरक्तः शून्यमा-
नसः । नैच्छद्द्रोऽप्याद्ययं पश्यन्नाशा वीरशुभामयीः ॥३७॥ तं तथारूपमालोक्यापृच्छद्धेतुं च सागरः। अभाषिषि सुते सोऽथाज्ञासीत्तं
मित्रपृच्छया ॥३८॥ सोऽवादीन्मा कृथाश्चिन्तां वत्सात्रार्थे मनागपि। न किञ्चिद्दुर्लभं विद्धि मयि तातेऽतिवत्सले ॥३९॥ मार्गयित्वा सुतां
सद्यो जिनदत्तात्सुदुर्लभाम् । पूरयिष्यामि ते पुत्र ! वाञ्छितं तन्मुदं भज ॥ ४० ॥ इति तातोदितं श्रुत्वा मन्यमानः प्रियागमम् ।
हृष्टश्चन्द्रश्चकाराशु स्वस्थचित्तोऽशनादिकम् ॥ ४१ ॥ सागरोऽथ प्रियां प्रेष्य जिनदत्तप्रियान्तिके । तद्भावोदितयाऽज्ञासीत्कृतनात्रक-
वार्तया ॥ ४२ ॥ प्राग् विदग्धद्विजान् प्रेष्य जिनदत्तगृहेऽन्यदा । ययौ मितपरीवारः सागरोऽपीष्टसिद्धये ॥ ४३ ॥ गृहं मिथ्यादृशो-
ऽप्यस्योपचारं समुपेयुषः । उचितं जिनदत्तोऽपि चक्रेऽर्हद्धर्ममर्मवित् ॥ ४४ ॥ यदुक्तम्—

"गेहागयाण उचियं, वसणावडिआण तह समुद्धरणं । दुहियाण दया एसो, सव्वेसिं सम्मओ धम्मो ॥ १ ॥"

अभाषन्त द्विजा नानादेशान् भ्राम्यद्भिरप्यहो ! । नेदृशो दृष्टोऽस्माभिर्योगः सत्तमयोः क्वचित् ॥ ४५ ॥ स्थैर्यं चेन्नात्रकेऽपि
कथञ्चिद्युवयोर्भजेत् । तदोत्तरानिलाम्भोदयोगवत्स्यान्मुदे भुवः ॥ ४६ ॥ अखिलं साधुभावीति जिनदत्तेन भाषिते । अगात्कृतोचि-
तालापः सागरो मुदितो मनाग् ॥ ४७ ॥ स्फुटमेवान्यदा तेन कन्याया मार्गणे स्वयम् । परिणामहितं श्राद्धो जिनदत्तोऽप्यचिन्तयत्
॥४८॥ कुलं शीलं वपुर्विद्या वयो वित्तं सनाथता । लोके लोकोत्तरे शास्त्रे मृग्याः मोक्ता वरे गुणाः ॥ ४९ ॥ शीलं नाम भवेद्धर्मः

स विशिष्य विलोक्यते । समानोऽभ्यधिको वाऽस्तु न हीनो विषमोऽथवा ॥ ५० ॥ वरं हि नरके वासो धर्महीने कुले न तु । नरकात् क्षीयते पापमितरस्माच्च वर्धते ॥ ५१ ॥ वैसदृश्ये च धर्मस्य प्रीतिः श्वशुरयोर्न च । दम्पत्योरपि नैव स्याद् योगस्तत्समधर्मणोः ॥ ५२ ॥ विना द्रव्यादि धर्माढ्ये कुले दत्ता वरं सुता । त्रिवर्गः सुलभो धर्मात्तं विना च चिरापदः ॥ ५३ ॥ जिनदत्तो विमृश्यैवमवक् श्रेष्ठिन् ! सुते तव । ननु सर्वे गुणाः सन्ति विनैकं धर्ममार्हतम् ॥ ५४ ॥ न स्वापत्यं नियुञ्जेऽहं परं वैधर्मिके ध्रुवम् । सागरोऽप्येवमाकर्ण्य विलक्षोऽगान्निजं गृहम् ॥ ५५ ॥ चन्द्रोऽप्याकर्ण्य तद्धन्यावहो ! आचारसौष्ठवम् । यत्रार्थितेति धर्मस्य न तु कामार्थमात्रयोः ॥ ५६ ॥ एवं तदनुरागेण गुरोः पार्श्वे निशम्य सः । मोहक्षयोपशमतो बुद्धोऽर्हद्धर्ममग्रहीत् ॥ ५७ ॥जीवाजीवादि तत्त्वज्ञो दृढचित्तः प्रमोदभाक् । धर्मं निधिमिव प्राप्तं मन्वानः सोऽभवत् क्रमात् ॥ ५८ ॥ कन्यालाभं विचिन्त्यैवं किञ्चित्पुत्रानुरोधतः । प्रपेदे तत्पिताऽप्यर्हद्धर्मं वाहीकवृत्तितः ॥ ५९ ॥ ज्ञात्वा श्राद्धोत्तमं चन्द्रं धर्मस्थैर्याय नात्रकात् । जिनदत्तोऽप्यदात्कन्यां तस्मै सर्वगुणात्मने ॥ ६० ॥ वृत्ते पाणिग्रहे पक्षद्वये हर्षोत्सवाढ्यैः । धर्मैक्येन परा प्रीतिर्दम्पत्योः क्रमतोऽभवत् ॥ ६१ ॥ मिथ्यात्वमन्दराघातैर्जडात्मा सागरः पुनः । व्यमुञ्चद्धर्मपीयूषं कृष्णपक्षविलोडितः ॥ ६२ ॥ पृथग्धर्मतया चागात् प्रीतिर्जनकजन्ययोः । विश्लिष्टकरयुग्मायाः पानीयं प्रसृतेरिव ॥ ६३ ॥ कियत्यथ गते काले पुरुषार्थत्रयीमये । जज्ञे वीरशुभाऽऽपन्नसत्त्वा सत्त्वाधिका क्रमात् ॥ ६४ ॥ अथ चैत्ये महापूजाक्षणे नाट्योत्सवेऽन्यदा । जायमाने वरातोद्यगीतध्वनिमनोहरे ॥ ६५ ॥ गीतानर्हद्गुणाञ् श्रुत्वा सङ्घमध्यस्थितो मुदा । गाथकेभ्यो ददौ चन्द्रो दीनारान् लक्षसंख्यकान् ॥ ६६ ॥ श्रुत्वा तत्सागरः क्रुध्यंस्तस्मै गृहमुपेयुषे । जगौ किं वायुना लक्ष्मीं मूढ ! निर्गमयस्यरे ? ॥ ६७ ॥ परोपार्जितभुग् ! वेत्सि न दुःखं हि धनार्जने । चन्द्रोऽप्यवग् मया क्षेत्रे धनमुप्तं न नाशितम् ॥ ६८ ॥

अर्हद्भक्तेः परं क्षेत्रं किञ्चित्तातास्ति नोत्तमम् । यत्र स्यात्पुष्पमप्युप्तं कल्पद्रुमसमं फलैः ॥ ६९ ॥ जिनधर्मं द्विषंस्तातोऽप्यवग् ज्ञंमन्य ! याहि रे । मा गा मत्सदनं कार्यं नार्हता भवताऽपि मे ॥ ७० ॥ दूनश्चन्द्रस्ततो यावत्कोटी स्वस्यार्जयामि न । तावन्नोपैमि ते गेहं प्रतिज्ञायेति निर्ययौ ॥ ७१ ॥ ज्ञात्वा ज्योत्स्नेव तच्चन्द्रानुगा वीरशुभाऽप्यभूत् । उचिता हि कुलस्त्रीणां सदा पत्यनुगामिता ॥ ७२ ॥ मार्गे सार्थाधिपेनाथ मिलितेन सह व्रजन् । अटवीं प्राविशच्चन्द्रः सह पत्न्या कियद्दिनैः ॥७३॥ दृष्ट्वा वीरशुभां मूढस्तदास्यै सार्थपोऽन्यदा । चन्द्रं राहुरिव क्रूरोऽजिघत्सन् मलिनः कुधीः ॥ ७४ ॥ ज्ञात्वेङ्गितैस्तदाकूतं पत्नी चन्द्रमजिज्ञपत् । सार्थाद् दूरे तदाद्येषोऽप्यस्वाप्सीत्सप्रियो भिया ॥ ७५ ॥ वटस्यधोऽन्यदा सुप्तोऽमूर्च्छद्दष्टोऽहिना निशि । दृष्ट्वा वीरशुभा चैनं जाग्रती दुःखिताऽरुदत् ॥ ७६ ॥ निरुध्य रुदितं दध्यौ यामि चेत्सार्थपान्तिके । तदा तस्येप्सितं जज्ञे नासन्नोऽन्योऽत्र कोऽपि च ॥७७॥ त्राणं चेद्धर्म एवातो ममास्य च सुमेधसः । ध्यात्वेत्युवाच हे क्षेत्रवनदेव्यः ! निशम्यताम् ॥७८॥ ममास्य मत्पतेश्चास्ति सम्यक्त्वं यदि निश्चलम् । तदाऽस्य जीवनोपायं कश्चित्कथयत द्रुतम् ॥ ७९ ॥ नान्यथा पारयिष्यामि कायोत्सर्गं सुनिश्चला । सेत्युदीर्याददे यावदुत्सर्गं ध्यानलीनहृत् ॥ ८० ॥ आविर्भूय प्रगे तावत्तयोः सम्यक्त्वतुष्टया । ददे देवतया तस्यै रत्नं सर्वविषापहम् ॥ ८१ ॥ एतज्जलेन सेच्योऽयं येन जीवति ते पतिः । देयं चास्मै यतोऽनेन दुष्टा न प्रभवन्ति च ॥ ८२ ॥ इत्युक्त्वाऽन्तर्हिते देवीरूपे साऽपि तथाऽकरोत् । उज्जिजीव द्रुतं चन्द्रो वृत्तान्तं साऽपि तं जगौ ॥८३॥ हृष्टौ द्वावपि तद्रत्नं लात्वा चन्द्रोऽग्रतोऽचलत् । सप्रियो रत्नतोऽरण्ये मुक्तसार्थोऽकुतोभयः ॥८४॥ क्रमात्पुष्पपुरं प्राप्तो मुक्त्वोद्याने प्रियां क्वचित् । पुरमध्ये प्रविष्टोऽयं शुश्राव पटहध्वनिम् ॥८५॥ राज्ञः कुसुमसारस्य पुत्रं कुसुमदृष्टिकम् । उज्जीवयति यः सर्पदष्टमिष्टं लभेत सः ॥ ८६ ॥ वादकादिति वृत्तान्तं निबुध्यामुं न्यवारयत् । उपभूपं नरैर्नीतोऽपश्यत्तं नृपदर्शितम्

॥ ८७ ॥ मान्यमाडम्बरं भूपादिष्वितीदं विधाय च। सज्जं मरायम्बुना चक्रे कुमारं स कुमारहृत् ॥ ८८॥ सुप्तोत्थितमिवायेक्ष्य पुत्रमा-
नन्दमेदुरः। आलिलिङ्ग नृपश्चुम्बन् रोमाञ्चैर्हर्षजैस्तुदन् ॥८९॥ दष्टोऽहिनाऽसि हे वत्स! जीवितोऽनेन साधुना। इत्युक्त्वाऽकारयत्पुत्र-
जन्मनीवोत्सवं नृपः ॥९०॥ आलिङ्ग्यार्धासने चन्द्रमुपवेश्यावदन्नृपः। कस्त्वं नः सुकृतैर्वत्स! कुतो वा समुपागमः? ॥ ९१ ॥ आकृत्या
च प्रकृत्या च लक्षितस्य कुलस्य ते। विश्वोत्तमस्य वाचाऽपि संवादं कर्तुमर्हसि ॥९२॥ चन्द्रोऽवक् श्रेष्ठिभूस्तातकोपादागां भिया वहिः।
नृपोऽप्यानाययद्वीरशुभां मेने सुतां च ताम् ॥ ९३ ॥ शृगाला इव निष्पुण्या भुञ्जतेऽन्योपढौकितम्। स्वबलोपार्जितं धीराः सिंहवच्चेति
बुद्धितः ॥ ९४ ॥ अगृह्णन्तं पुराऽभ्यादि चन्द्रं श्लिष्यन् प्रियान्वितम्। पुत्रीयन् सर्वकृत्येषु स्वपार्श्वेऽतिष्ठिपन्नृपः ॥ ९५ ॥ युग्मम् ॥
भ्राम्यंश्चन्द्रोऽन्यदोद्याने तिलकद्रुतले निधिम्। निधिकल्पविदज्ञासीत् खञ्जरीटस्य नृत्ततः ॥ ९६ ॥ कौतुकात् खनता तेन निधिकु-
म्भोऽप्यलम्भि च। निवेदिते च भूपाय तेन तस्मायदायि सः ॥ ९७ ॥ पूजादिविधिना चन्द्रः सुमुहूर्तेऽग्रहीच्च तम्। पञ्चाशत्सारदी-
नारलक्षमानोऽभवच्च सः ॥ ९८ ॥ सप्तक्षेत्र्यां स चार्थिभ्यो गृहोपस्करहेतवे। न्ययुङ्क्त व्यवहारे च तत्पादान् धीरहो! सताम् ॥९९॥
निवासायान्यदा चन्द्रो भूपं गृहमयाचत। मन्त्रिणाऽदापयत्तत्तु नृपश्चन्द्रं च मन्त्र्यवक् ॥ १०० ॥ तथाहि—

अत्राभूत् कृपणः श्रेष्ठी द्रव्यकोट्यष्टकाधिपः। द्रव्यार्जनैकवैयग्र्याज्जैनोऽप्यकृतधर्मधीः ॥ १०१ ॥ द्रव्यं निधाय कुत्रापि नाभुक्त
न ददौ च सः। पुत्रादीनां च नाचष्ट मृतोऽभूच्चामराधमः ॥ १०२ ॥ सोऽधिष्ठाय गृहं मोहात् कुटुम्बं निरवासयत्। व्याधिभिर्भाप-
नैश्चित्रैरकृत्यं दुर्धियां हि किम्? ॥ १०३ ॥ तद्भयेन च कोऽप्यस्मिन् शून्येऽप्यद्यापि नोषितः। यदि वत्स! समर्थोऽसि तमावासं
गृहाण तत् ॥ १०४ ॥ निशम्येति स्वभाग्यस्य बलजिज्ञासयाऽग्रहीत्। चन्द्रोऽथ सप्तभूमं तं भयं भाग्यवतो हि न ॥ १०५ ॥ ततः

प्रमार्जिते तस्मिन् जिनविम्बं निवेश्य सः । अर्चयित्वा च तत्सायं कृत्वाऽऽवश्यककर्म च ॥ १०६ ॥ न्याय्ये कालेऽथ्यपल्यङ्क
स्तुतदेवगुरुक्रमः । स्मरन् पञ्चनमस्कारमस्वाप्सीन्निर्विशङ्कहृत् ॥ १०७ ॥ युग्मम् ॥ व्यन्तरोऽपि स तं वीक्ष्य मर्त्यगन्धासहोऽवदत् ।
कस्त्वं मामवमत्यात्र शेषे मूर्ख ! मुमूर्षसे ॥ १०८ ॥ अभीतेऽस्मिंस्ततः क्रोधात्कृत्वा रूपं भयङ्करम् । अंघ्रिभिः कम्पयन् पृथ्वीं नभः-
स्फोटकरध्वनिः ॥ १०९ आगत्याग्निभरं चन्द्रोपरि ज्वालोल्वणं सुरः । ववर्ष यदि नो यासि तन्म्रियस्वेति स ब्रुवन् ॥ ११० ॥
युग्मम् ॥ हृदि मेऽर्हन् स्थिरो देवो गुरुश्चारित्रभाग् यदि । धर्मस्तदुदितश्चास्ति मा प्रभूदेष तर्हि मे ॥१११॥ विचिन्त्येति स्मरन् याव-
च्चन्द्रोऽस्ति परमेष्ठिनः । विलीनोऽकृततापोऽग्निस्तावन्मेघादिवाखिलः ॥११२॥ युग्मम् ॥ ततोऽधिकक्रुधा देवो घोरफूत्कारभारिणः ।
स्वशक्त्या फणिनोऽमुञ्चत् कालदण्डानिवाऽभितः ॥ ११३ ॥ वेष्टं वेष्टं च ते चन्द्रं दंशं दंशं च सर्वतः । विशीर्णमणयोऽभूवन् भग्न-
दन्तफणास्थयः ॥११४॥ न च रोमापि तैरस्य भिन्नं सम्यक्त्वशालिनः । विशुद्धस्य हि धर्मस्य महिमा केन मीयते ? ॥११५॥ ततो
गजांश्च सिंहांश्च भैरवानमुचत्क्रमात् । तथैव विफलत्वं तेऽप्यगुर्दध्यौ ततः सुरः ॥११६॥ अहो ! देवोऽथवा धर्मो हृदि कोऽप्यस्य नि-
श्चलः । अनुत्तरेण यस्याहं महिम्ना प्रभवामि न ॥११७॥ तत्समस्यापदान्यस्य यामे यामेऽर्पयाम्यहम् । सद्यो निद्रालुनाऽनेन तत्पूर्या
ताववैमि यत् ॥ ११८ ॥ देवश्चन्द्रं ततोऽवोचदहो ! त्वन्महिमाऽद्भुतः । न कुर्वे प्रतिकूलं ते समस्यां मम पूरय ॥ ११९ ॥ चन्द्रोऽप्यूचे
तवैवेच्छा प्रमाणमखिलाऽपि भोः ! । अहङ्कारभयोद्रेका न जैने प्रभवन्ति यत् ॥१२०॥ देव उवाच—स्याता सपद्विपत्ती । चन्द्र उवाच—
सकलतनुमता पूर्वकर्मानुभावात्, इति ॥ श्रुत्वैतत्साधिके यामे गते रात्रेरगात्सुरः । श्रमान्निद्रासुखं भेजे चन्द्रोऽप्यस्तभयः कियत्
॥ १२१ ॥ पुनर्द्वितीययामान्ते प्राप्तश्चन्द्रं सुरोऽवदत् । शेषे जागर्षि वा निद्रां मुक्त्वा जागर्मि सोऽप्यवक् ॥ १२२ ॥ देव उवाच—एकं

धार्यं। चन्द्र उवाच—सुधैर्यं विपदि तनुगतां धैर्यवश्या हि संपत्। एवं तृतीययामान्ते, देव उवाच—एको मृग्यः। चन्द्र उवाच—परात्मा त्रिभुवनशरणं मुक्तिदायी प्रयत्नात्, तथा चैवारुणोदये। देव उवाच—एकः सर्वेऽ रक्षां—चन्द्र उवाच—सृजति विधिवदासेवितो जैनधर्मः ॥१२३॥ श्रुत्वा पूर्णमिदं वृत्तं देवो दध्यौ चमत्कृतः ॥१२४॥ जैनोऽयं जिनदेवस्य जिनधर्मस्य चाद्भुतः। महिमेति मयाऽप्यैक्षि यतो मर्त्योऽपि देवजित् ॥१२५॥ धिग् मया प्राग्भवे प्राप्याप्येतौ नाराधितौ हहा। द्रव्यमूर्छासुरामत्तेनैव निर्गमितं जनुः ॥१२६॥ अमराधमतां प्राप्तं गमी पापैः पुनर्भवं। इममेव गुरूकृत्य तदर्हं धर्ममाश्रये ॥ १२७ ॥ निश्चित्येत्यब्रवीद्देवो भो भोः! तुष्टोऽस्मि तेऽधुना। सत्त्वेन धर्मतत्त्वेन धीमन्! याचस्व तद्वरम् ॥१२८॥ चन्द्रोऽवादीत्समग्रेष्टफलेऽस्मिन् धर्मपादपे। लब्धे न मेऽस्ति याच्यं भोः! किञ्चित्किन्त्वेतदर्थये ॥१२९॥ जिनं देवं प्रपद्यस्व गुरुं चारित्रपावनम्। तदुक्तं च दयाधर्मं येन प्राप्नोषि वाञ्छितम् ॥१३०॥ अमरोऽसि न ते कश्चिद्धनैरर्थोऽस्ति मर्त्यवत्। तदर्थं विदधत्पापं भवदुःखं किमश्नुषे? ॥ १३१ ॥ म्रियते ह्यमरोऽपीह नानायोनिषु च भ्रमन्। पापैः परोपतापाद्यैः क्रमात्स्यान्नारकोऽपि सः ॥१३२॥ सुरत्वं हारयन् भद्र! नृजन्मेव हहा मुधा। कषायवशगो मा भूर्बुध्यस्व स्वहितं चर ॥१३३॥ निशम्येति सुरं बुद्धं जिनधर्मस्य चार्थिनम्। चन्द्रो व्यासात्तमाख्याय सम्यक्त्वं मत्यपीपदत् ॥१३४॥ देवोऽवग् नोपकारीह परो धर्मस्य दायकात्। न ते स्यामनृणो मित्र! तथाऽपि स्वार्हमादधे ॥१३५॥ अदायि गुरवे तुभ्यं विमानाभमिदं गृहम्। द्रव्यकोट्योऽस्य कोणेषु निहिता ददिरेऽष्ट च ॥१३६॥ इत्युक्त्वान्तर्हितो देवः शय्यां चन्द्रोऽपि चामुचत्। चित्रं सूर्योदयेऽप्युद्यत्कान्तिः पद्मोल्लसद्रुचिः ॥ १३७ ॥ कृतप्रातर्जिनार्चादिकृत्यो देवोक्तदत्तहृत्। प्रियायै रात्रिवृत्तान्तमाख्यद् हृष्टा च साऽप्यवक् ॥ १३८ ॥ नृपचक्रिमहेन्द्रत्वशिवसौख्यैः फलेग्रहेः। कियदेतत्फलं जैनधर्मद्रोः सात्त्विकस्य ते ॥ १३९ ॥ सोऽप्यादाय स्वकोटीस्ताः पुमर्थेषु

न्ययोजयत् । कृतभूरिपरीवारः समियो विललास च ॥ १४० ॥ अभूदाभूपगोपं स वृत्तान्तश्च प्रसिद्धिभाग् । अहो ! भाग्यमहो !
सत्त्वं चन्द्रस्येत्यवदन् जनाः ॥ १४१ ॥ कालेन सुषुवे वीरशुभा पुत्रं सुलक्षणम् । उत्सवांश्च बहूंश्चक्रे चन्द्रो धर्मैकतत्परः ॥ १४२ ॥
अथ श्रेष्ठी तदा शान्तक्रोधाग्निः सागरः क्षणात् । तद्वियोगानलैस्तप्तः सुतमन्वेषयन्नरैः ॥ १४३ ॥ वनग्रामपुरादीनि भ्रामं भ्रामं
नरास्तु ते । लेभिरे क्वापि चन्द्रं न च्युतं रत्नमिवोदधौ ॥ १४४ ॥ शोचित्वाऽथ चिरं श्रेष्ठी गतपक्षमिवाण्डजम् । अपुत्रं मन्यमानः
स्वं धनोपार्जनहेतवे ॥ १४५ ॥ विरचय्य महासार्थमात्तभूरिक्रयाणकः । चतुष्कोटीमितं मूलद्रव्यमादाय सोऽचलत् ॥ १४६ ॥
युग्मम् ॥ देशान्तराणि स भ्राम्यन्नर्जयंश्च धनं बहु । क्रमाद्व्यवहरन्नानाऽचलत्पुष्पपुरं प्रति ॥ १४७ ॥ दूरादप्यायियासुं तं ज्ञात्वा
चन्द्रोऽथ मानभाक् । प्रतिज्ञां स्वां स्मरन् भूपात् शुल्कमण्डपिकां ललौ ॥ १४८ ॥ कथयिष्यति यः सम्यग् वस्तु शुल्कार्धदोऽस्तु
सः । सर्वस्वहरणाद्बन्धादिना दण्ड्यः परश्च मे ॥ १४९ ॥ इति भूपानुमत्या स व्यवस्थां चाकरोत् स्फुटम् । ततोऽस्य सत्यमेवाहुः
सर्वेऽपि व्यवहारिणः ॥ १५० ॥ अथागात् सागरस्तत्र प्रौढसार्थयुतोऽन्यदा । कृत्वोपदां च चन्द्राय वस्तु सर्वं न्यवेदयत् ॥ १५१ ॥
उपलक्षणभीत्या सोऽप्यददानः स्वदर्शनम् । सर्वाग्रेण कियत्तेऽस्तीत्यप्राक्षीत् श्रेष्ठिनं जनैः ॥ १५२ ॥ कोटिद्वयमितं स्माह श्रेष्ठी
चन्द्रोऽपि तं जगौ । अधिके तव दण्डोऽस्तु श्रेष्ठ्यप्योमित्युवाच च ॥ १५३ ॥ लेखयित्वाऽथ तत्सर्वमर्धशुल्कं विधाय च । सहैव
श्रेष्ठिना चन्द्रः प्रैषीन्मञ्चकुलं निजम् ॥१५४॥ स्वामिनः शिक्षया सम्यक् सर्वं वस्तु निरीक्ष्य तत् । चतुष्कोटीमितं ज्ञात्वा चन्द्रायै त-
न्न्यवेदयत् ॥ १५५ ॥ ततः सर्वस्वमुद्दाल्य बन्धयित्वा च सागरम् । चन्द्रोऽप्यचिक्षिपत् कारागृहे नष्टपरिच्छदम् ॥ १५६ ॥ स्वज-
नैस्तस्य विज्ञप्तो नाहं जाने नृपोऽवदत् । सागरानुमतेस्ते तच्चन्द्रमेव व्यजिज्ञपन् ॥ १५७ ॥ प्रसीद सागरं मुञ्च गृहीत्वाऽप्यखिलं

धनम् । चन्द्रोऽवक् श्रेष्ठिनं दृष्ट्वा करिष्याम्युचितं स्वयम् ॥ १५८ ॥ गतेषु तेषु चन्द्रोऽथ सागरं गतवन्धनम् । आनाय्य स्नपयित्वा च भोजयित्वा च गौरवात् ॥१५९॥ उपवेश्यासने वर्यपल्यङ्कस्थो जगाविति। श्रेष्ठिन् ! किं त्वं मृषाऽवादीः ? अभाग्यादिति सोऽप्यवक् ॥ १६० ॥ युग्मम् ॥ चन्द्रोऽवक्का गतिस्तेऽथ त्वमेवेति च सागरः । जगौ चन्द्रः स्वयं देशान् किं भ्राम्यसि जरन्नपि ? ॥ १६१ ॥ स्मृतपुत्रवियोगार्तिरुदस्राक्षोऽथ सोऽब्रवीत् । येन निर्गमितः पुत्रो मुधैव कुधिया मया ॥ १६२ ॥ चन्द्रोऽवक् कीदृशः सोऽभूत् ? श्रेष्ठ्यूचे त्वद्गुणाकृतिः । असंभावनया वक्तुं त्वं सैवेति तु न क्षमे ॥ १६३ ॥ इत्युक्त्वा संस्मृताभीष्टपुत्रशोकार्तिविप्लुतम् । रुदन्तं सागरं वीक्ष्य चन्द्रो जातकृपोऽवदत् ॥ १६४ ॥ तात ! सैवास्मि ते पुत्रः क्षमस्वाविनयं मम । इत्युत्थाय पदोश्चन्द्रः सागरस्यापतज्जवात् ॥ १६५ ॥ सागरोऽप्युपलक्ष्यैनं कदुष्णैर्नेत्रवारिभिः । स्नपयन् गाढमालिङ्ग्य सस्नेहमिदमूचिवान् ॥ १६६ ॥ दिष्ट्या दृष्टोऽसि वत्साद्य भाग्यैर्जागरितं मम । क्षमस्व कुपितुर्मन्तुं विश्वोत्तरगुणोऽसि यत् ॥ १६७ ॥ उपवेश्याथ पल्यङ्के चन्द्रः स्वपितरं मुदा । तत्पदौ संस्पृशन्नग्रोपविष्ट इदमुचिवान् ॥ १६८ ॥ तात ! पूर्णप्रतिज्ञोऽस्मि द्रव्यकोट्यष्टकार्जनात् । पश्यार्हद्धर्ममाहात्म्यं प्रपद्यस्वाधुनाऽपि तम् ॥ १६९ ॥ पृष्टे पित्रा स्ववृत्तान्तं जगौ चन्द्रोऽप्यशेषतः । श्रुत्वा तं विस्मयानन्दमेदुरः सागरोऽब्रवदत् ॥ १७० ॥ वत्स ! धन्योऽसि येनैवं निन्ये निश्चलतावशात् । गौरवं परमं धर्मोऽत्रापि दर्शयता फलम् ॥ १७१ ॥ साहाय्यं विधुरे देव्या लाभो मणिनिधानयोः । उपकाराद्वशो राजा सुरोऽभूत्किङ्करश्च ते ॥ १७२ ॥ एककोटिप्रतिज्ञातेऽप्यष्टकोट्यर्जनं यतः । धर्मं ते तं प्रपत्स्येऽहमप्युद्यत्सत्ययोऽधुना ॥ १७३ ॥ युग्मम् ॥ अथ चन्द्राज्ञया वीरशुभाऽप्यागत्य साङ्गजा । ननाम श्वशुरं तेन श्लाघिता क्षमिता त्वगात् ॥ १७४ ॥ मिलितौ तौ पितापुत्रौ ज्ञात्वा चन्द्रबुधाविव । आजगाम मुदा तत्र द्वयोरपि परिच्छदः ॥ १७५ ॥

उवाच पितरं चन्द्रः कुलीनो विनयोज्ज्वलः । तात! सर्वं तवैवैतद् भृत्यं मां स्वैरमादिश ॥ १७६ ॥ तातोऽप्युवाच हे वत्स ! किं मे द्रव्यैः प्रयोजनम् ? । मिलिते त्वयि सर्वेऽपि पूर्णा ह्यद्य मनोरथाः ॥ १७७ ॥ एत्यायोध्यां प्रमोद्याम्बां गृहभारं ततो वह । वयोऽहं विदधे येन निश्चिन्तो धर्ममार्हतम् ॥ १७८ ॥ ॐमिति प्रतिपद्यैतं गत्वोदन्तं व्यजिज्ञपत् । नृपं स सागरश्चन्द्रो मुमुदे विस्मितश्च सः ॥ १७९ ॥ धन्योऽयं सागरो यस्य चन्द्रो भाग्यनिधिः सुतः । अयं धन्यतमश्चन्द्रो यस्य धर्मे दृढा मतिः ॥ १८० ॥ स्तूयमानौ जनैरेवं पुमर्थत्रयसाधकौ । मिलितौ तौ कियत्कालं सुखं तत्र विलेसतुः ॥ १८१ ॥ अन्यदाऽवक् पिता पुत्रं व्यक्रेष्यानीतवस्तु तत् । गृहं यावः सुदुःखं हि मातुस्ते यान्ति वासराः ॥१८२॥ दध्यौ चन्द्रोऽपि धिग् मा यत्पित्रोर्दुःखाकरोऽभवम् । किं हि जातेन वा तेन ? यः पित्रोर्नैव पालकः ॥ १८३ ॥ ततोऽम्बामेलनोत्कण्ठाप्रेरितः स निजं गृहम् । वणिक्पुत्राय संभाल्य सारमादाय चाखिलम् ॥ १८४ ॥ आपृच्छ्य मेदिनीनाथं वधूपुत्रान्वितोऽन्यदा । समं पित्राऽचलत्तूरितन्त्रः प्रति निजां पुरीम् ॥ १८५ ॥ युग्मम् ॥ तदेवं प्रौढसार्थेन सपुत्रादिश्चलन् क्रमात् । अयोध्यां सागरः प्राप स्वजनानन्दनोत्सवः ॥ १८६ ॥ संतोष्योपदया भूपं पुत्रोदन्तं निवेद्य च । तेन प्रीत्यार्पितं चाथादाय हस्त्यादि सागरः ॥१८७॥ स्वजनैर्नागरैश्चामाऽभ्येत्योद्याने सविस्मयैः । अध्यारोप्य गजे चन्द्रं छत्रचामरशोभितम् ॥ १८८ ॥ नाट्यगीतवरातोद्यध्वनिडम्बरबन्धुरम् । बन्द्युद्घुष्टजयध्वानं वृद्धस्त्रीकृतमङ्गलम् ॥ १८९ ॥ सततं ददतं दानं गवाक्षाट्टादिशीर्षगैः । प्रशंसामुखरैर्नारीस्त्रैणैः संदर्शितं मिथः ॥ १९० ॥ याप्ययानगया वीरशुभया सह पुत्रया । महेन्द्रमिव राजन्तं शच्येव सजयन्तया ॥ १९१ ॥ चन्दनैः सिक्तरथ्यां सत्पताकातोरणावलीम् । प्रावीविशत् पुरीं शोभाजितनाकिपुरीं मुदा ॥ १९२ ॥ षड्भिः कुलकम् ॥ नतदेवगुरुर्गेहे प्राप्तोऽम्बां सप्रियाङ्गजः । चन्द्रो मिथो भृशस्नेहात् सहर्षोत्कण्ठमानमत् ॥ १९३ ॥

आशीर्मुखरतां नाना दधानालिङ्ग्य साङ्गजम् । परिचुम्ब्य मुदा मूर्ध्नि सुखसर्वस्वमन्वभूत् ॥ १९४ ॥ स्वागतालापपीयूषैर्वधूं संतोष्य चादरात् । तत्पुत्रं च हृदि न्यस्य श्लाघ्यं मेने स्वजीवितम् ॥१९५॥ क्षेमप्रश्नादिकालापैर्यावत् तृप्तिं न यान्ति ते । वर्धापनकृते नैके पौरास्तावदुपागमन् ॥ १९६ ॥ अथ सागरचन्द्रौ तानुचितप्रतिपत्तिभिः । संतोष्यानमतां भूपं भृशं तेनाऽपि सत्कृतौ ॥ १९७ ॥ चैत्येष्वानर्च चन्द्रोऽथ देवान् सद्गुरुंस्तथा । दीनादिभ्यो ददावर्हं सच्चक्रे स्वजनादिकान् ॥ १९८ ॥ अथ घस्रानतिक्रम्य कियतो विविधोत्सवैः । निधाय वेश्मनि द्रव्यं स्वेन पुत्रेण चाऽर्जितम् ॥ १९९ ॥ सकुटुम्बोऽन्यदा श्राद्धधर्मं भावेन सागरः । भद्रबाहुगुरोः पार्श्वे प्रपेदेऽर्हमहोत्सवैः ॥ २०० ॥ युग्मम् ॥ नवतत्त्वी विशेषज्ञः सप्तक्षेत्र्यां वपन् धनम् । षोढाऽऽवश्यकभाग् जज्ञे क्रमात् श्राद्धगणोत्तमः ॥ २०१ ॥ चिरमायुः प्रपाल्याथ श्राद्धधर्मप्रभावतः । सुरधाम जगामैष तत्प्रियाऽपि तथैव च ॥ २०२ ॥ स्वजनैस्तत्पदे न्यस्तश्चन्द्रो भाग्यप्रभानिधिः । शुद्धधर्मकलाधारी दिद्युते स्वकुलाम्बरे ॥ २०३ ॥ तस्य भाग्येन दानादिगुणैश्च विनयोज्ज्वलैः । रञ्जितोऽभूज्जनः सर्वः प्रशंसामुखरः सदा ॥ २०४ ॥ प्रसिद्ध्या प्रसरन्त्याऽथाभूपगोपं गुणश्रियाम् । योग्यं मत्वाऽकरोन्मित्रं तं प्रसादपदं नृपः ॥ २०५ ॥ पुमर्थत्रयलीनं सत्कलौचित्यप्रयोजकम् । महाब्धिमिव वाहिन्यः श्रियस्तमुपतस्थिरे ॥ २०६ ॥ स्वामिनो भद्रबाहोः स सप्रियः पदसेवया । अर्हत्प्रवचने प्राप संविग्नः कौशलं क्रमात् ॥ २०७ ॥ चतुरः सूपदेशे स क्रमाद्भूपमबूबुधत् । याति शैलोऽपि सौगन्ध्यं चन्दनद्रोर्हि सङ्गतः ॥२०८॥ तस्य राज्ञो रतिं देवीं क्रमात्सख्यमुपागता । पत्नी वीरशुभाऽप्यस्य जैनं धर्ममबूबुधत् ॥२०९॥ प्रत्यहं त्रिर्जिनानर्चन् षोढावश्यकतत्परः । सप्तक्षेत्र्यां वपन् द्रव्यं गृह्णन् पर्वसु पौषधम् ॥ २१० ॥ अधीयन् शुद्धसिद्धान्तं तदर्थांश्च विचारयन् । सप्रियो बोधयन् भव्यांश्चन्द्रो जन्माकृतार्थयत् ॥ २११ ॥ इति त्रिवर्गं सुचिरं प्रसाध्य काले सुतन्यस्तकुटुम्बभारः । प्रपाल्य

धर्मैकमय निजायुर्भेजे सभार्यः सुरधाम चन्द्रः ॥ २१२ ॥ असङ्ख्यकालं तदपारशर्म भुक्त्वाऽथ लब्ध्वा नरजन्मसारम् । उभावपीमौ सुचरित्रधर्मात् मयास्यतो मोक्षमनन्तसौख्यम् ॥ २१३ ॥ इत्यङ्गिनां श्रीजिनभक्तिविद्युद्विराजितः श्रावकधर्ममेघः । दुःखत्रयीतापमपास्य शस्या श्रियोऽक्षयानन्तसुखास्तनोति ॥२१४॥ जैनीं भक्तिं तद्गशाचार्हदानं धर्मे दार्ढ्यं विभ्रदापत्र्यपीह । मामोत्यङ्गी चन्द्रवद्वाञ्छितार्थान् कश्चित्कामाद्यर्थमप्याप्य धर्मम् ॥ २१५ ॥ चन्द्रवीरशुभयोर्निदर्शनात् श्राद्धधर्ममनुपालयन्ति ये । ते भवन्ति सकलेहितैहिकामुष्मिकाव्ययजयश्रियां पदम् ॥ २१६ ॥ एषाऽब्धीभेन्द्रसंख्येऽब्दे १४८४ चन्द्रवीरशुभाकथा । चक्रे स्वान्योपकाराय मुनिसुन्दरसूरिणा ॥ २१७ ॥

॥ इति श्रावकधर्मप्रभावे चन्द्रवीरशुभाकथा सम्पूर्णा । सवत् १४८४ वर्षे आश्विनमासे

देवकुलपाटके भट्टारकप्रभुश्रीश्री--मुनिसुन्दरसूरिपादैः कृता ।

॥ १ ॥

॥ अर्हम् ॥

# दानादिपुण्यफले धर्मधनकथा ।



जय श्रीमान् परब्रह्मानन्दस्त्रिजगदर्चितः । तत्त्वोपदेशकः श्रेयो रातु श्रीऋषभप्रभुः ॥ १ ॥ येन श्रीधर्मकल्पद्रू रोपितो भरतावनौ । दत्तेऽद्यापीहितार्थांस्तं श्रीवीरं श्रेयसे स्तुमः ॥२॥ शास्त्यम्बेव पदन्यासं बालान् या वाङ्मयाध्वनि। कविकल्पलतां स्तौमि शारदां वरदामिमाम् ॥३॥ तद्भर्तृत्वेन नाम्नाऽपि येषां ब्राह्म्युल्लसत्यहो ! । गुरवस्ते जयन्तु श्रीदेवसुन्दरसूरयः ॥ ४ ॥ ऐहिकामुष्मिकात्यन्तश्रेयःश्रीसस्पृहैर्बुधैः । जैने धर्मे सदा यत्नः कार्यः कार्यार्थवेदिभिः ॥ ५ ॥ चतुर्धा स च दानाद्यैर्दानं पात्रे फलाय च । पात्रं सङ्घो मुनिस्तत्राप्याद्यस्तस्येति तद्वरम् ॥ ६ ॥ जिनार्चयाऽतिशायीदं सा च चैत्यादिकारणात् । दानार्चे च धनात्साध्ये तच्च न्यायार्जितं गुरु ॥ ७ ॥ जुगुप्साखण्डनात्यागात्स्याद् दानादि च सत्फलम् । विभूषितो गुणैरेवं श्राद्धधर्मः शिवप्रदः ॥ ८ ॥ ततश्च । अथवा—

पात्रदानात् परं श्रेयःखण्डितं चास्य खण्डनात् । शुद्धेन व्यवहारेण वात्सल्याच्च सधर्मणाम् ॥ ९ ॥ चैत्यस्य कारणाद्देवगुरुभक्त्या च संपदः । इहामुत्रापि चेष्टाः स्युर्धनधर्मनिदर्शनात् ॥ १० ॥ युग्मम् ॥ अथवा—

पात्रदानात् परादेशादपि स्युः संपदोऽद्भुताः । जुगुप्सया मुनीनां च भवेन्नीचकुलादिकम् ॥ ११ ॥ अकुलीनोऽपि शीलाच्च लभतेऽभीप्सितं फलम् । श्लाघ्यं चेहापि दृष्टान्तः प्रियाऽत्र धनधर्मणः ॥ १२ ॥ युग्मम् ॥

तथाहि जम्बूद्वीपेऽत्र क्षेत्रे भरतनामनि । विजयस्थलनामाऽस्ति त्रिगर्तविषये पुरम् ॥ १३ ॥ स्वत्रिवर्गश्रिया तेन कामैकात्लघूकृतम् । स्वःपुरं वायुना नीतं मन्ये तूलवदम्बरे ॥ १४ ॥ शुद्धपुण्यरुचिः सौम्यो ज्ञसुहृत्सरलः स्थिरः । महेभ्यः प्रथितस्तत्र जज्ञे नाम्नैव मङ्गलः ॥ १५ ॥ जीवाजीवादितत्त्वज्ञः सर्वधर्मक्रियोद्यतः । अभूदाभूपगोपं स प्रथितः परमार्हतः ॥ १६ ॥ गृहे तस्याभवन् कोट्यः सुवर्णस्यैकविंशतिः । न पारोऽन्यधनानां च पाथोधौ पाथसामिव ॥ १७ ॥ श्रीदेवीति प्रिया तस्य जज्ञे विष्णोरिवाद्भुता । सौभाग्यादिगुणा यस्या विश्वाह्लादकृतोऽभवन् ॥ १८ ॥ वाञ्छितार्थास्तयोः सर्वे सर्वतः पूर्तिमैयरुः । चिरं बाधां विधत्ते स्म परमेकाऽनपत्यता ॥ १९ ॥ पुत्रार्थं विदधाते तौ पूजां च गुरुदेवयोः । दीनदानोपवासादिपुण्यं चान्यच्चिरं बहु ॥ २० ॥ मध्यमे वयसि प्राप्ते श्रेष्ठिनोऽस्य प्रियाऽन्यदा । स्वप्नेऽपश्यत्सुषुप्ता सा निशीभं सर्वलक्षणम् ॥ २१ ॥ प्रबुद्धा मुदिता साऽवक् पत्युः सोऽपि मुदाऽवदत् । आवयोस्तनयो भावी महेभाभः श्रियां पदम् ॥ २२ ॥ प्रतिश्रुत्येदमेषाऽपि हृष्टा धर्मपराऽभवत् । बभार चान्यदा गर्भं किं हि धर्मान्न सिद्ध्यति ? ॥ २३ ॥ उचिते समये चास्या दीनदानादिदोहदाः । कान्तेन पूरिता भाग्यभाजां किं नाम दुर्लभम् ? ॥ २४ ॥ अथ पूर्णेषु घस्रेषु सुमुहूर्ते शुभेऽह्नि सा । सुषुवे भास्वरं पुत्रं दिगैन्द्रीवार्कमण्डलम् ॥ २५ ॥ वीक्ष्य नेत्रसुधावर्षं पुत्रं सौम्यं सुलक्षणम् । चन्द्रबिम्बं चकोरीवानिर्वाच्यं हर्षमाप सा ॥ २६ ॥ दास्याऽथ कथिते श्रेष्ठी पुत्रजन्मनि दुर्लभे । हर्षाद्दानं ददौ तस्यै यत्तां दास्यं व्यसस्मरत् ॥ २७ ॥ आगताक्षतपात्रौघं तरुणीगीतमङ्गलम् । सत्कृतार्थिजनज्ञातिनागरौघं यथोचितम् ॥ २८ ॥ रत्नैर्मुक्ताफलाद्यैश्च कृतवर्धापनाद्ध्यम् । मिथो दत्तसुमानेकफलालङ्कारवाससम् ॥ २९ ॥ मङ्गलातोद्यनादाढ्यं नानानाट्यमनोहरम् । मौक्तिकस्वस्तिकाद्यैश्च रम्यं रचितमङ्गलैः ॥ ३० ॥ दानप्रीतार्थिदत्ताशीःप्रचयं श्रेष्ठ्यपि व्यधात् । सुत-

जन्मोत्सवं विज्ञाऽविज्ञाश्चर्यप्रमोददम् ॥ ३१ ॥ चतुर्भिः कलापकम् ॥ षष्ठीजागरणाद्येषु महेषु विहितेऽथ । धनवर्मेति नामास्य पित्राद्याः समये ददुः ॥ ३२ ॥ वर्धमानोऽथ भेजे स समये सकलाः कलाः । विश्वनेत्रामृताङ्गश्रीराकायामिव चन्द्रमाः ॥ ३३ ॥ क्रमादुद्यौवनो रूपं प्राप तत्किञ्चिदद्भुतम् । बभूवुर्निर्निमेषाद्दयो मानुष्योऽपि यदीक्षणे ॥ ३४ ॥ ततोऽथ वन्धुदत्तेभ्यतनयां प्रियदर्शनाम् । स्त्रैणचूडामणिं तेन सोत्सवं पर्यणीनयत् ॥ ३५ ॥ भुञ्जानः स तया भोगान् सर्वकामगुणात्मकान् । व्यतीयाय कियत्कालं धर्मकिर्मीरितं मुदा ॥ ३६ ॥ अथ तत्र पुरे वेश्या ख्याता लीलावतीत्यभूत् । द्युम्नप्रद्युम्नविश्रामधाम कामं कलानिधिः ॥ ३७ ॥ साऽन्यदाऽजीजनत्पुत्रीं निष्कलङ्ककलामयीम् । इन्दुलेखां द्वितीयेव वर्धमानद्युतिश्रियम् ॥ ३८ ॥ बाला साऽपि जगन्नारीरूपसारैर्नु निर्मितम् । बिभ्राणाऽप्यङ्गमाश्चर्यं ख्याताऽनङ्गवतीत्यभूत् ॥ ३९ ॥ समयेकृतसङ्केताः स्वैरिण्य इव कामुकम् । तदङ्गं सुभगं भेजुरौत्सुक्यात्सकलाः कलाः ॥ ४० ॥ यौवने च तदङ्गेऽभूद्रूपश्रीः काचिदद्भुता । यां प्राप्तुं भजते मन्ये श्रीर्हरिं पार्वती हरम् ॥ ४१ ॥ तरन्तीव तदङ्गानि बभुर्लवणिमह्रदे । शेकुर्मग्नानि नोद्धर्तुं युवानः स्वमनांसि तु ॥ ४२ ॥ स्वानुरूपमपश्यन्ती पश्यन्त्यपि बहून्नरान् । दधौ सा पुरुषद्वेषं सर्वानवगणय्य तान् ॥ ४३ ॥ अन्यदा धनधर्मा स विलसन् स्वेच्छया पुरे । अमा मित्रैर्व्रजन् दृष्टो गवाक्षस्थितया तया ॥४४॥ नेत्रकैरवचन्द्रेऽस्मिन् दृष्टमात्रे लसद्द्युतौ । उल्ललासोन्मिषत्स्नेहरसस्तस्या हृदम्बुधिः ॥ ४५ ॥ द्राग् भृशौत्सुक्यमाप प्राग्भवसंस्कारजागरात् । स्नेहरागवशात्तस्मिन् सा रसान्तरविस्मृतेः ॥ ४६ ॥ विलीने घनमानाभ्रस्तोमे तद्दर्शनानिलात् । प्रादुर्बभूव कामार्कतापस्तस्या हृदम्बरे ॥ ४७ ॥ तत्स्वरूपमथ ज्ञात्वेङ्गितैर्लीलावती मुदा । तं दास्याऽजूहवन्नैच्छत्स तु वेश्यागृहागमम् ॥४८॥ तद्वयस्यानथाकार्य प्रीणयित्वा च साऽवदत् । कथञ्चिद्धनधर्माणमिहानयत भो !

द्रुतम् ॥ ४९ ॥ तां प्रमोद्य तदुत्कोरीकृत्या तेऽपि गृहागताः । तुष्टुवुर्धनधर्माग्रेऽनङ्गवत्या गुणान् मुहुः ॥ ५० ॥ नैच्छत्तथाऽपि तां श्राद्धः स चोपायान्तरैरपि । निन्ये तु तद्गृहायेणाऽसकृन्मित्रैः कृतैर्मिषैः ॥ ५१ ॥ तद्वियोगाग्नितापं च द्वारस्थाऽनङ्गवत्यपि । तद्दर्शन-सुधावर्षैरसकृन्निरवापयत् ॥५२॥ अभ्यायाति गजेऽन्येद्युः क्रुद्धे तद्भयदर्शनात् । आसन्नत्वाद् गृहं तस्या मित्रैर्निन्ये प्रसह्य सः ॥५३॥ मयूरीव घनं दृष्ट्वा तं हृष्टाऽनङ्गवत्यभूत् । उपाचरत्तथा दाक्ष्याद्यथाऽसौ प्रेमभागभूत् ॥५४॥ नेत्रपात्रैः पपौ सोऽथ तल्लावण्यं यथा यथा । तथा तथा सतृष्णोऽभूद् युक्तं तत्सङ्गमामृते ॥ ५५ ॥ तस्याः स्नेहरसासारैः कटाक्षैर्विद्युदञ्चितैः । क्षेत्रे रागांकुरास्तस्याभवन् रोमा-ञ्चदम्भतः ॥ ५६ ॥ तज्ज्ञात्वा यावतोपेमोऽमुकं कृत्वा प्रयोजनम् । तावत्तिष्ठेस्त्वमत्रैवेत्युक्त्वाऽगुः सुहृदो विदः ॥ ५७ ॥ उन्मि-पत्स्नेहपाशेनाकृष्य नीतस्तयाऽथ सः । गृहान्तर्दिव्यपल्यङ्के सानन्दमुपवेशितः ॥ ५८ ॥ तमुवाच च सा प्रभोऽद्य मे जनुरासीत्सुकृतैः फलेग्रहिः । प्रससाद कुलान्र्यदेवता त्वमभूर्यन्नयनामृतप्लवः ॥ ५९ ॥ सोऽप्युवाच तव सुन्दरि ! रूपे वीक्षितेऽद्य सफलेक्षणसृष्टिः । हृत्तुदन्ति तदियन्ति गतानि त्वद्वियोगविधुराणि दिनानि ॥ ६० ॥ इत्याद्यालापपीयूषैः सिक्ते स्नेहद्रुमेऽथ सा । चेटीसज्जितसा-मग्र्या वैदग्ध्यात्तमसिष्णपत् ॥ ६१ ॥ अथःकृतसुधास्वादां नानारसवतीं च सा । रज्यन्तं सूपचारैस्तं काले स्नेहादबूभुजत् ॥ ६२ ॥ ततोऽर्पितसुताम्बूलं सा पुष्पशयनस्थितम् । हरिचन्दनलिप्ताङ्गं गीताद्यैस्तमपिप्रिणत् ॥ ६३ ॥ स विनोदान्तरैश्चापि सुविदग्धजनो-चितैः । तयाऽऽप्तसुखसर्वस्वोऽजीगमत् क्षणवद्दिनम् ॥ ६४ ॥ समयेऽथ विमानाभे सर्वकामगुणान्विते । वासवेश्मनि पल्यङ्के दिव्ये-ऽस्वाप्सीत्तया सह ॥ ६५ ॥ ततोऽसौ क्षणदां नव्यसुरतक्षणदां सुखम् । क्षणवत् क्षपयामास रतिश्रान्त्याप्तनिद्रया ॥ ६६ ॥ वीणा-ध्वनिविमिश्रोद्यद्दासीगीतकलस्वनैः । प्रबुद्धो मुखशौचादि प्रातःकृत्यं ससर्ज सः ॥ ६७ ॥ एवं दिने दिने वृद्धिमतिभोगरसे

रतः । तस्यां भृङ्ग इवाब्जिन्यां कियत्कालमजीगमत् ॥ ६८ ॥ तत्स्वरूपं पिता ज्ञात्वा यौवनस्योचितं ह्यदः । इत्युपेक्षां कियत्कालं चक्रे प्रेम्णाङ्गजन्मनः ॥ ६९ ॥ कियत्यथ गते कालेऽत्यासक्तं तं निबुध्य च । मित्रैराकार्य तद्विद्यागुरुणैवमशिक्षयत् ॥ ७० ॥ अर्हद्धर्मपवित्रेऽस्मिन् जातोऽसि विमले कुले । वेश्याव्यसनपङ्केन वत्स ! तन्मा कलङ्कय ॥ ७१ ॥ यतः—

गणयन्ति नापशब्दं न वृत्तभङ्गं व्ययं न चार्थस्य । रसिकतया व्याकुलिता वेश्यापतयश्च कवयश्च ॥ ७२ ॥ इति ।

नो गुरुर्वसति नैव च देवो लज्जया विरहिते न च धर्मः । मद्यमांसरसनामलिनाङ्ग्या वेश्यया कृतपदे हृदि पुंसः ॥ ७३ ॥ या विटेऽपि च नटेऽप्यकुलीने शौनिकेऽपि कितवेऽपि च चौरे । राजनीव विदधात्युपचारान् लोभिनीं भजति तां गणिकां कः ? ॥ ७४ ॥ यो विहाय कुलजां निजपत्नीं शर्मणे भजति पण्यपुरन्ध्रीम् । सोऽवधूय करगां वरपेयां तृप्तयेऽनलशिखां पिबतीह ॥७५॥ इक्षुदण्डमिव हृद्भुजयुग्मे या निपीड्य नरमर्पितसारम् । कूर्चकीकृतमिव क्षिपति द्रागिक्षुयन्त्रवदिमां त्यज वेश्याम् ॥ ७६ ॥ सुरूपाः सद्गुणा वश्यस्तवायत्ताः कुलाङ्गनाः । धर्मपत्नीषु तद्रज्यं त्रिवर्गं भज पुत्रक ! ॥ ७७ ॥ इति विद्यागुरोः शिक्षां स मूर्खो प्रत्यपद्यत । लज्जा वा गुरुवाग्वा यत् कुलीनानां नियन्त्रणा ॥ ७८ ॥ तदादि व्रीडया स स्वगेहे देहमतिष्ठिपत् । मनो ग्रहणकेऽनङ्गवत्याः पार्श्वेऽमुचत् पुनः ॥ ७९ ॥ सर्वक्रियास्वरज्यन्तं वेश्यैकगतमानसम् । तं ज्ञात्वाऽथ तदम्बाऽवक् पुत्रप्रेम्णाऽन्यदा प्रियम् ॥ ८० ॥ बहुकोटिमिते द्रव्ये गेहे सत्यपि किं प्रिय ! । छिनत्त्येकसुतस्येच्छां त्यागभोगफलं हि तत् ॥८१॥ सर्वमहं करिष्यामीत्युक्त्वा श्रेष्ठ्यचिन्तयत् । मातुरित्याशयेनायं दुर्वारो व्यसनात्सुतः ॥ ८२ ॥ दुर्वारोऽग्निर्दहन् यद्वत्काननं किन्तु वात्यया । दत्तौजा व्यसनी मात्रा तथाऽयमनया धनम् ॥ ८३ ॥ तदायतिहितां शिक्षां दित्सुः श्रेष्ठी विशिष्टधीः । अन्यदा तनयं स्माह श्रवं मधुरया गिरा

॥ ८४ ॥ युतः कुलादिसामग्र्या दुर्लभो नृभवोऽङ्गिनाम् । कथञ्चित्तदिमं प्राप्य कृतार्थय महाशय ! ॥ ८५ ॥ धर्मार्थकामैश्च कृतार्थ-
ताऽस्य सारं पुनस्तेष्वपि धर्म एव । मूलं हि सोऽन्यद्वितयस्य तन्न त्वया स हेयो विधुरेऽपि पुत्र ! ॥ ८६ ॥ तत्रापि सारं गुरुदेव-
भक्ती पात्रे च दानं व्यवहारशुद्धिः । विपद्यपीदं गृहिधर्मरत्नचतुष्टयं तत्त्वमिति प्रशार्यम् ॥ ८७ ॥ इति शिक्षा पितुर्मूर्ध्ना मपद्याथा-
न्यदाऽगमत् । रज्ज्वाकृष्ट इवानड्वान् प्रेम्णाऽनङ्गवतीगृहे ॥ ८८ ॥ पूर्ववत्सुखसर्वस्वं भुञ्जानः स तया सह । दानभोगात्मभिः कालं
विनोदैरनयद्बहुम् ॥ ८९ ॥ तत्रस्थस्यापि तस्येष्टं पिता द्रव्यमपूपुरत् । वेश्याप्रहितदास्याऽपि स्नेहे हि न विचारणा ॥ ९० ॥
यथेच्छं द्रव्यकोटीभिर्भुञ्जानो विषयानयम् । कालं विवेद नो यान्तं दोगुन्दुग इवामरः ॥ ९१ ॥ कदाऽप्यदर्शितस्वान्तप्रतिकूल-
तया तया । सुखितो द्वादशाब्दानि सोऽह्नानीवात्यचिक्रमत् ॥ ९२ ॥ अन्यदा गाढमन्देन पित्राऽऽहूतोऽपि लज्जया । स नागमद्दिवं
श्रेष्ठी श्राद्धधर्मादवाप च ॥ ९३ ॥ गृद्धो भोगरसेष्वेष विवेदापि न तन्मृतिम् । स हि नाम रसो यत्र न वेद्यान्तरवेदनम् ॥ ९४ ॥
तथैवाविश्रमं तस्य भोगैर्विलसतः सुखम् । प्रैषीन्माताऽपि च द्रव्यं पुत्रप्रेम्णा यथेप्सितम् ॥ ९५ ॥ श्रेष्ठिनाऽथ वणिक्पुत्रा द्रव्यो-
पार्जनहेतवे । प्रहिता ये विदेशेषु नानाभाण्डसमन्विताः ॥९६॥ स्वर्गतं मङ्गलं ज्ञात्वा सुतं व्यसनिनं तथा । ते विग्रह्य स्थितास्तत्र
श्रीदेव्या ज्ञापितोत्तराः ॥ ९७ ॥ क्षीणं गृहगतं द्रव्यं क्रमाद्वेश्यार्पणादिना । ततोऽन्यदा स्वनामाङ्का श्रीदेव्या प्रैष्यलंकृतिः ॥ ९८ ॥
लोलावत्यपि तां वीक्ष्य ज्ञात्वा तं निर्धनीकृतम् । ऐच्छत्त्यजयितुं पुत्र्या वेश्या हि स्वा न कस्यचित् ॥ ९९ ॥ प्राग्भवस्नेहतोऽन-
ङ्गवती तद्गुणरञ्जिता । इयेष धनधर्माणां न च त्यक्तुं कथञ्चन ॥ १०० ॥ अथान्यदा ययाचे साऽलक्तकं मातुरन्तिके । साऽप्याकृष्ट-
रसं तस्याः प्रबोधार्थमिदं ददौ ॥ १०१ ॥ किमनेनेति पुत्र्योक्ते मातोचे वेत्सि चेदिति । नीरसं तद्वजस्येतं कान्तं किं निर्धनं सुते !

॥ १०२ ॥ इत्युमप्यर्थिता सैवं कूचकानर्पयन्त्यवक् । गुणाब्धिनीरसो नायं दध्यौ पुत्रीति मौनभाक् ॥ १०३ ॥ लोलावत्यन्यदा द्रव्याऽनायविज्ञा जगौ सुताम् । प्रसिद्धमपि वत्से ! स्वं कुलाचारं न वेत्सि किम् ॥ १०४ ॥ म्लानमब्जं यथा भृङ्गी हंसी शुष्कं यथा सरः । पक्षिणी वाऽफलं वृक्षं वेश्या त्यजति निर्धनम् ॥ १०५ ॥ कुलपत्नी किमस्यासि मुधा गमय मा जनुः । निःस्वेऽस्मिन्नीरसे प्रेम विघ्नयत्यागमं श्रियाम् ॥ १०६ ॥ युवानो बहवः सन्ति धनरूपगुणाधिकाः । रतिमन्यतरस्मिंस्तेष्ववाप्य कुरु नः प्रियम् ॥ १०७ ॥ ऊचेऽनङ्गवती मातः ! दुःश्रवं किं वदस्यदः ? । द्रव्यमात्रार्थिनी नेमं भजे किन्तु गुणार्थिनी ॥ १०८ ॥ पदं यथेन्दुर्महसां सुमेरुः सुरद्रुमाणां जलधिर्मणीनाम् । तथा गुणानामयमेव पात्रं नान्यत्र कुत्रापि हि ते समग्राः ॥१०९॥ एतत्प्रसादाद् द्रविणं गृहे नः समस्ति चासप्तमवंश्यभोग्यम् । त्यजाकृतज्ञत्वमनर्थमूलं गुणेषु चित्तं कुरु दुर्लभेषु ॥११०॥ न ते कुलाचारमहं विधास्ये त्यक्षामि नैनं न परं श्रयिष्ये । न पद्मिनी यत्तरणेरुपास्ते पतिं परं कैरविणी न चेन्दोः ॥१११॥ दध्यौ लोलावती त्यक्ष्यत्येषाऽमुं नातिरागिणी । अयमेवावमान्यस्तद्गृहान्निर्याति यत्स्वयम् ॥११२॥ ततस्तया परीवारः शिक्षितोऽस्य पदे पदे । स्नानभोजनशय्यादिष्वकरोदपमाननाम् ॥११३॥ ज्ञात्वा तद्धनधर्माथ निरगात्तद्गृहान्निपात । सहन्ते हि न जीवन्तो मानिनो मानखण्डनाम् ॥ ११४ ॥ गतेषु द्वादशस्वब्देष्वधिकेषु तदाऽभवत् । फणीव स गतक्ष्वेडो निर्दन्तः करटीव च ॥११५॥ अनन्यगतिकत्वाच्चाचलन्निजगृहे तदा । प्रविशन् द्वारपालेन रुद्धः कोऽसीति भाषिणा ॥ ११६ ॥ श्रेष्ठिनो मङ्गलस्यास्मि सूनुर्यामि निजं गृहम् । मेलनोत्कण्ठया पित्रोः किं रुणत्सीति सोऽप्यवक् ॥ ११७ ॥ द्वारपालोऽप्यवग् नास्मिन्नावासे पितरौ तव । किन्तु सार्थाधिपो देवदत्तो वसति भाटकात् ॥ ११८ ॥ धनधर्माऽब्रवीत् क्वास्ति मङ्गलो वेत्सि चेद्वद । सोऽवक् स्वः प्राप स श्रेष्ठी वेश्यासक्तश्च तत्सुतः ॥ ११९ ॥ तद्वधूः पितृगेहेऽगात् श्रीदेवी

निर्धना ततः । प्रागभ्यासागताध्यर्थाशावैफल्यं द्रष्टुमक्षमा ॥ १२० ॥ एतदाजीविकार्थं स्वं भाटकेनार्पयद् गृहम् । स्वयं च निष्परीवारा न्यवसत् पाटकान्तरे ॥१२१॥ युग्मम् ॥ भाटकग्रहणार्थं च साऽत्रायात्यन्तरान्तरा । कृपया दर्शयाम्यौकस्तस्याश्चेत्संजिगंससे ॥१२२॥ तत् श्रुत्वा वज्रपाताभं मुक्तकण्ठं रुरोद सः । अवस्थाद्वितयं पित्रोः स्वापरायं च चिन्तयन् ॥१२३॥ बोधितो द्वारपालेन निरुध्य रुदितं च सः । दध्यौ धिग् जन्म मे पित्रोरिति दुःखाकरोऽभवम् ॥ १२४ ॥ गर्भ एव विलिनोऽस्मि न किं बाल्ये न किं मृतः ? । दृष्टान्तो दुश्चरित्राणां जातो धिग् जीवितं मम ॥ १२५ ॥ यदासत्या च पित्राद्या दुःखं स्वात्मा च लम्भिताः । वेश्या साऽपीदृशं चक्रे धिग् मे दुर्बुद्धिजृम्भितम् ॥ १२६ ॥ ततः केनाप्युपायेन सद्यः संमत्यपि म्रिये । भ्रष्टमानधनानां हि जीवितान्मरणं वरम् ॥ १२७ ॥ यदुक्तम्—

"वरं प्रविष्टं ज्वलिते हुताशने द्रुमालये पुष्पफलादिभोजनम् । तृणेषु शय्या वरजीर्णवल्कलं न बन्धुमध्ये धनहीनजीवितम् ॥१॥"

अथवा चेन्म्रिये मातुस्तद्दुःखं जीवितावधि । मिलित्वाऽस्यास्ततो द्रव्यमर्जयामि विदेशगः ॥ १२८ ॥ मेलिष्याम्यथवा नैव मातुर्लज्जेऽधुना यतः । वेश्ययाऽप्यभिभूतोऽस्मि दर्शयामि मुखं कथम् ? ॥ १२९ ॥ मिथश्च दुःखसंक्रान्त्या प्राग्दुःखं द्विगुणीभवेत् । निःस्वेन हि मृतेनेव कस्तोषो मातृभार्ययोः ? ॥१३०॥ धास्यन्ति बन्धवो लज्जां हृदि खेदं च सज्जनाः । उपहासं करिष्यन्ति खला नार्यश्च कच्चडान् ॥१३१ ॥ अर्जयित्वा धनं तोषमम्बा पत्नी च तन्वये । भाग्यं चेत्सुलभा संपत्तन्न चेज्जीवितेन किम् ? ॥ १३२ ॥ किञ्च सर्वास्ववस्थासु त्याज्यं सत्त्वं न धीमता । श्रियः सत्त्वात्प्ररोहन्ति यान्ति सत्योऽपि तद्विना ॥ १३३ ॥ किञ्च धर्मचतुष्कं तत्सारं पित्राऽस्मि शिक्षितः । आसेविताद्विदेशेऽपि यस्मान्मे सुलभाः श्रियः ॥ १३४ ॥ सति मूले यथा वृक्षः सिक्तच्छिन्नोऽपि रोहति।

पोडश्या कलया सत्या प्राप्नोतीन्दुश्च ता गताः ॥ १३५ ॥ रक्षन् पुण्यं सुधीस्तद्वल्लभतेऽपि गताः श्रियः । देशान्तरेऽपि तद्धर्मं सेविष्ये तातभाषितम् ॥ १३६ ॥ यतः—

" छिन्नोऽपि रोहति तरुः क्षीणोऽप्युपचीयते पुनश्चन्द्रः । इति विमृशन्तः सन्तः सन्तप्यन्ते न विधुरेषु ॥ १ ॥"

मया च नाशितं यावत्का प्रभा तावतोऽर्जने । अर्जयिष्यामि तत्कैश्चिदुपायैर्द्विगुणं धनम् ॥ १३७ ॥ विमृश्येति स्वपुण्यं स जिज्ञासुः सात्त्विकाग्रणीः । देशान्तरगतिं धीमान् निश्चित्य द्वाःस्थमब्रवीत् ॥ १३८ ॥ वन्धो ! वाच्या ममास्त्वैवं धनधर्मा सुतस्तत्र । अमिलित्वैव ते श्रीडाह्लद्दन्यै देशान्तरेऽगमत् ॥ १३९ ॥ द्विचत्वारिंशतं कोटीरर्जयित्वैव तद्धनम् । मेलिष्यति सुखं तिष्ठेस्तावत्त्वं स्ववधूयुता ॥ १३९ ॥ ओमित्युक्तेऽथ तेनायमभिमानधनोऽचलत् । कर्मदेहसहायोऽथो पुरेऽगात् पाण्डुवर्धने ॥ १४० ॥ वणिक्पुत्रेण तातस्य भ्रमन् दृष्ट्वोपलक्ष्य च । नीतोऽसौ स्वगृहे स्वामिभक्त्या गौरवितो भृशम् ॥ १४१ ॥ दिनानि कतिचित्तिष्ठन् गृहे तस्यान्यदापणे । कूटमानैः स तं वीक्ष्य व्यवहारिणमब्रवीत् ॥१४२॥ न्यूनैर्मानैः कथं दत्से कथं गृह्णासि चाधिकैः ? । मुग्धवञ्चनया मूढ ! कथमर्जसि पातकम् ? ॥ १४३ ॥ यदुक्तम्—

" कृत्वा क्षयं स्नेहदशा गुणानां प्रदीपलेखेव पलायते श्रीः । अवश्यमेकं त्ववशिष्यते तन्मालिन्यमुच्चैर्जनितं तया यत् ॥१॥ "

" अयि ! दुर्गतिपातकारणं तदशुद्धव्यवहारितां त्यज । द्रुतगत्वरतां विचिन्तयन् धनदेहस्वजनायुषामिह ॥२॥ "

वणिक्पुत्रोऽप्यवक् शुद्धव्यवहारे कुतः श्रियः ? । तथाऽपि त्वद्गिरः शक्त्या चिन्तयिष्यामि पालने ॥ १४४ ॥ उपदेशान्तरेष्वेवं जायमानेषु वन्वहम् । लुब्धो दध्यौ वणिक्पुत्रः कर्तुं नैतद्वचः क्षमे ॥ १४५ ॥ अयं सुश्राद्धपुत्रश्चोपदेशाद्विरमेन्नहि । श्रुत्वा कदा-

चित्तल्लोको मा स्म त्याक्षीन्मदापणम् ॥ १४६ ॥ तत्मातः प्रेषयाम्येनं किञ्चिदन्त्वेति सोऽन्यदा । ध्यात्वा सुष्वाप तद्गेहं चौरैश्चामोपि
तन्निशि ॥ १४७ ॥ ज्ञात्वैतद्धनधर्माऽपि निराशः खिन्नलज्जितः । निन्दन् कर्मविपाकं स्वं ययौ देशान्तरे क्रमात् ॥ १४८ ॥ स
मङ्गलपुरे प्राप्तो वणिक्पुत्रेण तत्पितुः । तथैव स्वगृहे निन्ये स्थापितश्च सगौरवम् ॥१४६॥ स तस्याप्यन्यदा हट्टे मिश्रं तत्प्रतिरूपकैः ।
क्रयाणकगणं वीक्ष्योपादिक्षत् स्मृततातवाक् ॥ १५० ॥ तथैवोत्तरचिन्ताढ्ये जाते तन्निशि तद्गृहम् । दग्धं प्रदीपनाद्वीक्ष्याधिकं
खेदाच्च निर्ययौ ॥ १५१ ॥ तामलिप्त्यां क्रमात् प्राप्तं वणिक्पुत्रस्तथैव तम् । गृहे नीत्वा कियत्कालं सगौरवमतिष्ठिपत् ॥ १५२ ॥
सोऽपि काञ्चनमाणिक्यजातीयव्यवसायकृत् । तद्विज्ञान्मृषामूल्यैर्लुब्धो वञ्चयते जनान् ॥ १५३ ॥ तदप्रत्ययतो लोका हट्टस्थं वीक्ष्य
साकृतिम् । पपृच्छुर्धनधर्माणं सोऽप्यादीच्च यथातथम् ॥१५४॥ प्रागवत्तेनोपदिष्टे च प्रागवद्ध्यौ वणिक्सुतः । अबुद्ध स्वर्णरत्नादि-
परीक्षाकुशलं च तम् ॥ १५५ ॥ स्वगृहे चित्रशालायां तमासीनं च सोऽन्यदा । श्वेतरत्नावलीहारं मूल्यं पृच्छन्नदीदृशत् ॥१५६॥
लक्षे सपादे तन्मूल्ये प्रोक्तेऽथ धनधर्मणा । मुक्त्वा पात्रे तदग्रे तां कार्यात्सोऽन्तर्गृहं गतः ॥ १५७ ॥ तावच्चित्रशिखी भित्तेरुत्तीर्या-
गिलदेतिकाम् । तस्थौ स्थाने च तद्वीक्ष्य धनधर्मोऽप्यचिन्तयत् ॥ १५८ ॥ अहो ! एतदसंभाव्यमपि कर्मानुभावतः । ममापतितमेवेह
यन्न दृष्टं श्रुतं क्वचित् ॥ १५६ ॥ तदुक्तम्—

" यन्मनोरथगतेरगोचरो यत्स्पृशन्ति न गिरः कवेरपि । स्वप्नवृत्तिरपि यत्र दुर्लभा हेलयैव विदधाति तद्विधिः ॥१॥ "

धिग्मे कर्मपरीणाममुपर्युपरि यद्वशात् । इयं दुःखततिस्तीव्रा स्थाने स्थाने नवा नवा ॥१६०॥ पितुर्विनाशो व्यसनेन चार्थ-
त्रयोऽधमस्त्रीविहिताभिभूतिः । मातुर्वियोगोऽभिभवो विदेशे चौर्यस्य चायं भविता कलङ्कः ॥१६१॥ वणिक्पुत्रस्य तद्दास्ये मार्गणोऽ-

ऽस्याः किमुत्तरम्?। को हीदृशमसंभाव्यं श्रद्धत्ते दर्शनं विना? ॥१६२॥ सग्रस्तद्ग्रामि निर्गत्य न प्रगल्भोऽस्मि यत्कलौ। ध्यात्वेति निर्ययौ तस्माद् गृहात्स द्राक् पुरादपि ॥ १६३ ॥ वेलाकूलं क्रमात्प्राप्तः सिंहलद्वीपगामिनम्। दृष्ट्वा पोतमथारूढस्तत्स्वामिकृतवृत्तितः ॥ १६४ ॥ क्रमात्प्राप च तं द्वीपं संयोगात्कर्मधर्मयोः। दृष्ट्वा ज्ञात्वा च लोकानां व्यवहारमचिन्तयत् ॥ १६५ ॥ जाने कर्मगतप्रायं संमत्यासीन्ममाशुभम्। मय्यारूढेऽप्ययं पोतः क्षेमेण यदिहागमत् ॥ १६६ ॥ व्यवसायं ततः कुर्वे किञ्चनोद्यम्य संप्रति। सत्यां कालादिसामग्र्यां फलन्ति तरवोऽपि हि ॥ १६७ ॥ यतः—

" अव्यवसायिनमलसं दैवपरं पुरुषकारपरिहीणम्। प्रमदा इव वृद्धपतिं नेच्छत्यवगूहितुं लक्ष्मीः ॥ १ ॥ "

" सर्वकर्मसु सदैव देहिनामुद्यमः परमबान्धवो मतः। यं विना हृदयवाञ्छितान्यहो! नाप्नुवन्ति नियतं यदि क्षमाः ॥२॥ "

विचिन्त्येति स पोतेशात् प्राप्य वृत्तिधनं कियत्। पृथक् तस्थौ तमापृच्छ्य भाटकात्ते क्वचिद्गृहे ॥१६८॥ ततोऽयतत विक्रेतुं स फलाद्यल्पमूल्यकम्। उपार्जिजच्च कर्मानुभावाद् द्रव्यं शनैः शनैः ॥१६९॥ दध्यौ कियत्यतिक्रान्ते काले धिग् जीवितं मम। योऽहमात्मम्भरिः काक इव त्यक्तकुलक्रमः ॥१७०॥ स्मृत्वा पितृवचो जातपात्रदानस्पृहस्ततः। विना साधर्मिकं नैकं भुङ्क्ते स्म स कदाचन ॥१७१॥ एवं धर्मानुभावेन सबलव्यवहारतः। व्यवहारविशुद्ध्या च क्रमाल्लक्षमुपार्जयत् ॥ १७२ ॥ यतः—

"पुष्णाति धर्मो धनिनो धनौघैः पुष्णन्ति ते तं सततं धनैश्च। भाग्यैः क्वचिद्धर्मधनेश्वराणां मिथः स्फुरेत्पोषकपोष्यभावः ॥१॥"

सोऽन्यदाचिन्तयत्कार्यं भूरिद्रव्यार्जनं मया। प्रौढैस्तद्व्यवहारैः स्यान्नीवीप्राचुर्यतश्च ते ॥ १७३ ॥ न च वृद्ध्यादिना भूरि धनं वैदेशिकस्य मे। विना ग्रहणकं कश्चिद्ददातीति करोमि किम्? ॥१७५॥ इति चिन्तातुरस्यास्यान्यदा पूर्णमुखो वणिग्। आचख्यौ

जम्भिलोऽत्रास्ति यक्षो लेप्यतनुर्महान् ॥ १७५ ॥ कलान्तरेण दत्ते स वणिजामीप्सितं धनम् । सन्ध्यायामर्चयित्वा च मार्गितोऽर्पयति प्रगे ॥ १७६ ॥ प्रत्यर्पयति यो नोक्ते काले तं हन्ति तु क्षणात् । प्रायोऽर्पयति तस्यैव यस्माद्दातुमीश्वरः ॥ १७७ ॥ धनधर्मा निशम्येति द्रव्योपायं मुदाऽन्यदा । यक्षस्यायतने गत्वा सायं तं विधिनाऽर्चयत् ॥ १७८ ॥ स प्रत्येकशतं वृद्धावुक्त्वा द्रव्यमयाचत । ग्रन्थिं दीनारकोट्याश्चाग्रहीद् यक्षकरात् प्रगे ॥ १७९ ॥ यक्षदत्तं धनं ज्ञात्वा परेऽपि व्यवहारिणः । तस्य वृद्धयादिनेष्टं तद्ददुर्विश्वस्तमानसाः ॥ १८० ॥ ततो मुक्तामणिस्वर्णविद्रुमादिकवस्तुभिः । व्यवसायानयं प्रौढानकार्षीद्बहुधा बहून् ॥ १८१ ॥ स्मरन् पितृवचो नित्यं बहुलाभेऽपि नामुचत् । व्यवहारविशुद्धिं च प्रसिद्धिश्चाभवत्तया ॥१८२॥ विज्ञाविज्ञास्ततः सर्वे तेनैव व्यवहारिणः । निःशङ्काश्चक्रिरे साकं व्यवहारान् बहूनपि ॥ १८३ ॥ एवं व्यवहरन्नेष धर्मन्यायप्रसिद्धिभाग् । वसुभिर्ववृधे नित्यं कलाभिरिव चन्द्रमाः ॥ १८४ ॥ सोऽन्यदाचीकरच्चैत्यं तत्रार्चोपस्करान्वितम् । जिनं तस्मिन् प्रपूज्यैवाभुङ्क्त साधर्मिकैः सह ॥ १८५ ॥ गुरून् सामग्र्यभावेऽपि स्तुवन् भक्त्या स शुद्धधीः । पुष्णांस्ततोदितं धर्मं निश्चयश्रावको बभौ ॥ १८६ ॥ यतः—

" सामग्गिअभावेऽवि हु वसणे वि सुहे वि तह कुसंगे वि । जस्स न हायइ धम्मो निच्छयओ जाण तं सड्ढं ॥ १ ॥ "

धर्ममर्थार्जिने पोषमेषोऽनैषीद् यथा यथा । धनौघं सोऽपि चैतस्य स्पर्धयेव तथा तथा ॥ १८७ ॥ एवं व्यवहरन्नेष दशभिस्तत्र वत्सरैः । द्विचत्वारिंशतं कोटीः साधिका लीलयाऽर्जयत् ॥ १८८ ॥ पूजयित्वाऽन्यदा यक्षं सवृद्धिं कोटिमार्पयत् । तुष्टो यक्षोऽपि तां लात्वा तस्यादात्सदलङ्कृतीः ॥१८९॥ देयं दत्त्वा च सर्वेषां पूर्वदृष्टानुसारतः । श्वेतरत्नावलीमेकां जात्यरत्नैरचीकरत् ॥१९०॥ स्वचैत्ये सर्वदा पूजायुक्तिं कृत्वा धनैर्दृढाम् । साधर्मिकांश्च सत्कृत्यापृच्छ्य लोकांश्च संस्तुतान् ॥ १९१ ॥ तोष्यान् संतोष्य सद्दानै-

॥२४१॥ जानामि तं किन्तु न मेऽस्ति सख्यो भवत्कुलाचारगुणेन कार्यम्। लोकद्वयं यद्विहितं निहन्ति कस्तत्र कृत्ये रमते विवेकी ॥ ॥ २४२ ॥ किञ्च—सर्वदा पारतन्त्र्याद्यैर्निन्द्यं जन्मैव योषितः। तत्राप्यं हि महापापैः किं पुनः परायत्तयोषिताम् ? ॥ २४३ ॥ यस्या नाम्नाऽपि दृष्ट्यापि सङ्गत्याऽपि च लज्ज्यते। सद्भिर्या त्यज्यते तस्या वेश्याया जन्म किं भुवि? ॥२४४॥ सर्वभोज्या सर्वपेया सर्वगम्याऽभिभूतिभूः। नित्यं निःस्वामिका वेश्या खरीवातिजुगुप्सिता ॥२४५॥ भुक्त्वा सर्वरसान् निन्द्याशुचीन् पापैर्विटैः सह। कामपङ्के सदा शेते धिग्गर्ताशूकरीव या ॥२४६॥ दौःशील्यैकसुखभ्रान्त्या परायत्ता विटादिभिः। वेश्याजन्मत्रयं पापैर्निन्द्यं बोधयति स्वकम् ॥ २४७ ॥ मृता च नरके घोरं वह्निपुंसङ्गमादिभिः। भोज्यते सुचिरं वेश्या दौःशील्याद्यघजं फलम् ॥ २४८ ॥ स्त्री स्यात्तिर्यक्षु दुःशीला खर्युष्ट्री तुरगी मृगी। शूकर्यजाऽपि वा भारवहनाद्युग्रदुःखभाक् ॥ २४९ ॥ कथंचिन्नृभवेऽप्याप्ते वन्ध्या निन्दुर्गराङ्गना। बालरण्डा कुरण्डा वा दुर्गन्धा दुर्भगाऽथवा ॥२५०॥ कुरूपा कटुवाग्योनिरोगा कुष्ठादिरोगिणी। हीनाङ्गी निष्कलाधारा दुष्कलाभिभवास्पदम् ॥ २५१ ॥ दुर्जीवाऽल्पायुरिष्टैः स्वैः पुत्राद्यैश्च वियोगिनी। स्त्री दौःशील्यादिभिर्दीर्घदुःखान्यनुभवेदिति ॥ २५२ ॥ विशेषकम् ॥ अशुच्यङ्गेच्छया कामो निन्द्यः किन्त्वापणस्त्रियाः। अशुच्यशुचितत्सङ्गादिहामुत्र च दुर्गतेः ॥ २५३ ॥ कर्मणा केनचिन्नीचकुलाब्धौ पतिताऽपि तत्। सख्यः! स्वमुद्धरिष्यामि शीलनावा मृतेरपि ॥ २५४ ॥ किञ्च—जीवन्त्यां मयि यद्युपैति दयितो मन्ये कलङ्कस्तदा स्नेहः स्निग्धजने वियोगिनि कथं मृत्युं विना लक्ष्यते ?। मृत्युश्चेन्न च तत्समागमसुखं तेनागतेनाप्यहो! कष्टं तद्विरहे विकल्पबहुलं दोलायते मे मनः ॥ २५५ ॥ व्यकल्पयंस्ततः सख्यस्तत्त्वादेषा कुलाङ्गना। दुष्टाऽदृष्टेन केनापि जाता वेश्याकुलेऽप्यहो! ॥२५६॥ ततः सतीव्रतस्यैषा गिराऽपि प्रतिकूलया। मरिष्यति ध्रुवं प्राणाः किं हि सत्या विना पतिम् ? ॥२५७॥यतः—

स्वदेशासत्त्यां च मेलनोत्कराठुलोऽभवत् ॥ २२६ ॥ दध्यौ च स तदा लोलावत्या निःस्वोऽभ्यभाविपि । वृत्तं प्राणप्रियाया नाऽन-
ङ्गवत्यास्तु वेद्म्यहम् ॥ २२७ ॥ तया हि प्रातिकूल्यं मेऽदर्शि वाचाऽपि । नाणवपि वाङ्मनोवपुषां स्नेहाद्व्यभिचारोऽपि कर्हिचित्
॥ २२८ ॥ तदत्रैव स्थितस्तस्या वृत्तं विज्ञाय केनचित् । कुर्वे तदनुसारेण मेलने सत्क्रियादिकम् ॥ २२९ ॥ शिक्षयित्वा ततस्तेन
तद्वृत्तालोकहेतवे । सखा कल्याणमूर्तिर्द्राक् प्रैपि लक्षधनान्वितः ॥२३०॥ अगात्त्रिगर्तदेशेऽथ स पुरे विजयस्थले । लोलावत्याऽऽ-
लयाभ्यर्णे भाटकात्ते गृहे स्थितः ॥ २३१ ॥ फाल्गुनच्युतपत्रादिकाननस्य दशां गतम् । नृगमागममुक्तं सोऽपश्यल्लोलावतीगृहम्
॥ २३२ ॥ तत्स्वरूपं प्रवृत्तिं चाऽनङ्गवत्या बभुत्सुना । तद्दासीविहितप्रीतिस्तेन पृष्टाऽन्यदाऽवदत् ॥ २३३ ॥ कुमारो धनधर्मात्रा-
नङ्गवत्याः प्रियोऽभवत् । साधिकद्वादशाब्दयाऽदात् कोटीर्यः स्वस्य षोडश ॥२३४॥ स क्रमान्निर्धनीभूतो लोलावत्याऽपमानितः ।
निर्ययौ तमदृष्ट्वा च दुःखिताऽनङ्गवत्यभूत् ॥ २३५ ॥ त्यक्तस्नानाङ्गसंस्कारा नाभुक्त त्रिदिनी च सा । लोलावत्याकुलीभूता बहुधा
तामबोधयत् ॥२३६॥ अबोधे तद्गिरा सख्यस्तामूचुर्बोधहेतवे । मूढे ! ताम्यसि निःस्वाय किमाचारं न वेत्सि नः ? ॥२३७॥ यतः—

"वयं बाल्ये डिम्भांस्तरुणिमनि यूनः परिणतावपीच्छामो वृद्धान् परिणयविधिस्तु स्थितिरियम् ।
त्वयारब्धं जन्म क्षपयितुममार्गेण किमिदं ? न नो गोत्रे पुत्रि ! क्वचिदपि सतीलाञ्छनमभूत् ॥ १ ॥

येऽर्थक्षयकृतः कामा लोके शास्त्रे च विश्रुताः । सर्वतः सुलभा यस्मिंस्त एवेष्टार्थसाधकाः ॥ २३८ ॥ सर्वलोकप्रियं स्वैरं
सदेन्द्रियसुखात्मकम् । निष्कलङ्कं नृपैर्मान्यं क्व तद्वेश्याजनुः पुनः ॥ २३९ ॥ युग्मम् ॥ मिष्टाहारांस्ततो भुङ्क्ष्व भोगांश्च युवभिः सह ।
सामग्री हि दुरापेयं मा क्लेशिष्टाः कदाग्रहात् ॥२४०॥ चतुःषष्टिकलादक्षा विवेकाञ्जनशुद्धदृग् । नानाशास्त्रार्थतत्त्वज्ञा जगादानङ्गवत्यथ

"सर्वोपकारो गुणदोषदृष्ट्यदृष्टी परेषां न कदापि गर्वः । स्वभाग्यशक्तिर्व्यवहारशुद्धिर्महाशयानामिति लक्षणानि ॥१॥"

इति ध्यात्वा वणिक् प्रोचे नैषा मे सा भवेत् प्रभो ! । सोऽप्यवक् सत्यमेषा तत्प्रतिच्छन्दो हि कारिता ॥२१०॥ तां विक्रीय तदाकार्ष मूलद्रव्यं श्रियोऽर्जने । वणिक् स्माह मुधा किं मां विप्रतारयसि प्रभो ! ॥ २११ ॥ सा हि प्रागपि मत्पार्श्वेऽस्तीति स्वां तामदर्शयत् । अर्पयित्वा परां चाऽवक् शिखिवृत्तं यथायथम् ॥२१२॥ धनधर्मा जगौ भद्र ! गिलन् दृष्टो मया शिखी । असंभाव्यं त्वनुवत्यैतां स्वशुद्ध्यर्थमकारयम् ॥२१३॥ अथ प्रौढोपदां कृत्वा नत्वा चाऽवग् वणिक्सुतः । अद्यारभ्यास्मि ते भृत्यः प्रभो ! यत्कृत्यमादिश ॥ २१४ ॥ सोऽपि सत्कृत्य तं न्यस्य प्राक्पदेऽस्योपदामलात् । सन्तो न्यत्कारसत्कारौ सहन्ते समये किल ॥ २१५ ॥ शिक्षापूर्वं च संभाल्य तत्र विक्रेयमार्पयत् । पोतवस्तु स तस्यैव सहग्राह्यं त्वसज्जयत् ॥ २१६ ॥ गृहीत्वा शकटाद्यैस्तदापृच्छ्य च वणिक्सुतम् । सेवार्थं प्रहितेनैतत्तनयेन युतोऽन्यदा ॥ २१७ ॥ धनधर्माऽग्रतोऽचालीत् नानाप्रौढपरिच्छदः । क्रमाच्च वर्धमानश्रीः स मङ्गलपुरेऽगमत् ॥ २१८ ॥ युग्मम् ॥ कृतार्हत्कृत्यः स प्राग्वद्वणिक्पुत्रगृहेऽगमत् । संभ्रमं गौरवाद्यं च सोऽप्यस्मिन् प्रागिव व्यधात् ॥ २१९ ॥ वृष्ट्यभावेन शुष्यत्सु तदा धान्येषु तत्र च । वणिग्गृहीतग्रामेषु ववर्षाब्दोऽथ तद्दिने ॥२२०॥ रत्नवृष्टिरियं नूनं भाग्यवानिति चिन्तयन् । वणिक् प्रौढोपदां कृत्वा धनधर्माणमब्रवीत् ॥२२१॥ भृत्योऽहं तव तातस्याभूवं मागधुना तु ते । सोऽपि सत्कृत्य तं पूर्वस्थाने हृष्टो न्ययोजयत् ॥ २२२ ॥ विक्रेयमर्पयित्वाऽथ वस्तु शिक्षां प्रदाय च । तत्सुतेन सह प्रापन्नगरं पाण्डुवर्धनम् ॥ २२३ ॥ वणिक्पुत्रेण तत्रापि प्राग्वच्चक्रेऽस्य गौरवम् । स चैतदश्वबन्धार्थं कीलकायाखनद्ध्रुवम् ॥ २२४ ॥ प्रादुर्भूतं निधिं तत्रादायैतद्भाग्यमाननात् । कृत्वैतस्योपदां प्रौढां भृत्यत्वं स प्रपन्नवान् ॥ २२५ ॥ धनधर्माऽपि सत्कृत्य प्राक्पदे तं न्यवीविशत् । मातुः

रात्तोचितपरिच्छदः । सारैर्भाण्डैर्भृतान् पोतान् सज्जीकृत्य स सप्त च ॥ १९२ ॥ सुमुहूर्ते कृताम्भोधिपूजो देशं निजं प्रति । प्राच-
लत्कतिभिर्घस्रैस्तामलिस्यामथागमत् ॥ १९३ ॥ जनान् पोतेषु मुक्त्वा सोऽकरोद्राज्ञो महोपदाम् । मुक्तशुल्कश्च तेनाथ सच्चक्रे विश्रुतः
पुरे ॥ १९४ ॥ तं प्रौढमागतं श्रुत्वा दध्यौ सोऽपि वणिक्सुतः । कोऽसौ मत्स्वामिपुत्रस्य नाम्ना धत्ते समानताम् ? ॥ १९५ ॥ इति
चिन्तयतस्तस्य गृहे सोऽपि समागमत् । वन्द्युद्घुष्टगुणो वाजिपदैर्निर्घोषयन् भुवम् ॥ १९६ ॥ धनधर्मा स एवायमहो ! प्राप्तो दशान्त-
रम् । इति संभ्रमतस्तं द्रागभ्युत्तस्थौ वणिक्सुतः ॥ १९७ ॥ धनधर्माऽपि जात्याश्वादुत्तीर्य पतितं पदोः । तमालिङ्ग्य कृतं तेन
गौरवं बह्वमन्यत ॥ १९८ ॥ वणिक्सूनुरुवाचैषा स्वामिन् ! श्रीस्ते कुतोऽभवत् । तातशिक्षितसद्धर्मचतुष्कादिति सोऽप्यवक् ॥
१९९ ॥ अहो ! भाग्यं तवेत्यादि प्रशंसंस्तं वणिक्सुतः । नानारसान् दधच्चक्रे तस्य स्नानादिगौरवम् ॥ २०० ॥ भार्या कार्येण
तस्याथ चित्रशाला गता तदा । भित्तिचित्रमयूरास्येऽपश्यत्तां रत्नमालिकाम् ॥ २०१ ॥ तामादायाथ तद्वृत्तमुक्त्वा सा पत्युरार्पि-
पत् । गृहव्यन्तरकृत्यं तद्विस्मितः सोऽप्यमन्यत ॥ २०२ ॥ एतत्कस्यापि मा वादीरित्युक्त्वा स च वल्लभाम् । तां जुगूह स्तुवन्
भाग्यं तदास्या धनधर्मणः ॥ २०३ ॥ धनधर्माऽथ भुक्त्वा तत्कृतगौरवरञ्जितः । पल्यङ्के चित्रशालायामासीनोऽवग् वणिक्सुतम् ॥
२०४ ॥ मित्र ! स्मरस्यनापृच्छ्य त्वां तदा बन्धुभावतः । निःस्वो नीव्यै ग्रहीस्यामि श्वेतरत्नावली तव ॥ २०५ ॥ एतयोपार्जिता
च श्रीस्तदेतां लाहि सांप्रतम् । एवमुक्त्वाऽर्पयत्तस्य रत्नमालां स्वकारिताम् ॥२०६॥ वणिगादाय तां सम्यग् विभाव्याथ व्यचिन्तयत् ।
नवीनोत्तमतास्याहो ! या न दृष्टा श्रुता क्वचित् ॥२०७॥ इदानीमेवमत्पत्न्या रत्नमाला तथाऽर्पिता । अयं कलङ्कभीरुस्तु स्वामेता-
मार्पिपत् किल ॥२०८॥ अहमस्य पितुर्द्रव्यं भक्षयित्वा स्थितोऽधमः । अयं त्वित्युत्तमाचारो नृत्वेऽहो ! कियदन्तरम् ॥२०९॥ यद्वा—

" भृशं स्नेहेन लोभेन क्रोधेनाभिभवेन च । मानेन च त्यजन् प्राणान् धीरो नैव विचारयेत् ॥ १ ॥ "

विश्वाद्भुतगुणे बद्धरागैषा धनधर्मणि । उपायेनैव तद्बोध्यैकेन तत्सङ्गमाशया ॥ २५८ ॥ आल्योऽवोचंस्ततो वत्से ! मा विषीद मनस्विनि ! । धन्याऽसि यत्सदाचारं धत्से वेश्याकुलेऽप्यहो ! ॥२५९॥ स्थाने धत्सेऽनुरागं च स हि सर्वगुणोत्तरः । विलोक्यानेष्यतेऽस्माभिस्त्वत्पतिर्श्लक्ष्ण सांप्रतम् ॥ २६० ॥ जीवन् पश्यति भद्राणि जीवन् लोकद्वयीहितम् । जीवो जीवन् प्रियाप्तिं च मा मृथास्ततत्क्षुधा वृथा ॥ २६१ ॥ न स संयुज्यते यावत्कुर्वाणा प्राणधारणाम् । तावत्पतिव्रताचारं न्याय्यं घोरं समाचर ॥ २६२ ॥ जगौ सैवं करिष्यामि नाम्बा चेत्प्रतिरोधिका । ता भलिष्यामहे तत्रेत्यूचुः सोचे तदास्त्विति ॥२६३॥ लोलावतीमथोपेत्य सोपालम्भमिमा जगुः । द्वादशाब्द्या ददौ कोटीर्यः पोडश धनस्य ते ॥ २६४ ॥ मूढे ! निष्कासितः सोऽपि कल्पद्रुर्जङ्गमः कथम् ? । कल्पवल्ली स्वपुत्री किं गमिता प्राणसंशयम् ? ॥ २६५ ॥ युग्मम् ॥ यदीहसेऽथ जीवन्तीं तदेतां मुञ्च मुत्कलाम् । जगौ सानुशया साऽपि प्रमाणं यूयमेव मे ॥ २६६ ॥ गवेषितोऽपि सर्वाभिर्धनधर्मा त्ववापि न । तत्प्रवृत्तिं तु पृष्टाऽऽख्यद् द्वाःस्थाज्ज्ञातां तदम्बिका ॥ २६७ ॥ हृष्टानङ्गवती श्रुत्वा तां भर्तुः सङ्गमाशया । प्राणरक्षाकृते भुक्त्वा जगौ लोलावतीमथ ॥ २६८ ॥ यामि श्वश्रूसमीपेऽम्ब ! तिष्ठामि च तदाज्ञया । अनन्यगतिकत्वात्तल्लोलावत्यप्यमन्यत ॥ २६९ ॥ ततोऽनङ्गवती दास्या विज्ञाप्योदन्तमात्मनः । तदनुज्ञापितो हृष्टा श्रीदेव्या अन्तिकेऽगमत् ॥ २७० ॥ पतित्वा तत्पदेऽश्वाख्यद्वधूरस्मि तवानुगा । ध्यास्ये पतिव्रताचारं त्वच्छुश्रूषारता सदा ॥२७१॥ त्वत्पुत्रेण च मद्भर्त्रा दत्तं मेऽस्ति धनं बहु । गत्वा निजगृहे तेन तिष्ठ दास्या मया सुखम् ॥ २७२ ॥ पुण्यैर्दीनादिदानाद्यैः कृतैर्मद्भर्तुरागमे । मनोरथानां सर्वेषां भवित्री सिद्धिरावयोः ॥ २७३ ॥ दध्यौ श्रीदेव्यहो ! स्थानेऽनुरागस्तनयस्य मे । आचारादतिशेते हि सर्वाः

कुलवधूरियम् ॥ २७४ ॥ सत्यं प्रीतिर्भवेत् प्रायः समानकुलशीलयोः । योगोऽयं कस्य नो चन्द्ररोहिण्योरिव संमतः ॥ २७५ ॥ नावमान्या तदेषा मे विनीता सुभगा सती । मुदे मे दर्शनं ह्यस्याः पुत्रदर्शनवत्सदा ॥ २७६ ॥ मङ्गल्यादागमाच्चास्या वेद्मि सूनोः समागमम् । ध्यात्वेति साऽवदद्वत्से ! त्वं प्रमाणं सदाऽपि मे ॥२७७॥ हृष्टाऽनङ्गवती तस्थौ तत्पदोपास्तिकृत्ततः । द्रव्यं प्रच्छन्नमानाय्य स्वं तस्याश्चार्पयद्बहु ॥ २७८ ॥ चक्रे गृहप्रवेशादि श्रीदेवी तद्धनेन च । दीनदानादिकुर्वाणे ते चास्थातां समाधिना ॥ २७९ ॥ धत्ते पतिव्रताचारं वियोगेऽनङ्गवत्यथ । परिधत्ते सितं वासो वपुःसंस्कारमत्यजत् ॥ २८० ॥ पुरुषेण सहालापमेकान्ते तु विशेषतः । नख-दन्तशिरःकेशसंस्काराभरणादि च ॥ २८१ ॥ पूर्वक्रीडास्मृतिं कामकथां दोलादिखेलनम् । पुञ्जीतादिश्रुतिं नाट्यनृत्तिर्यग्रतिवीक्षणम् ॥ २८२ ॥ तूलीताम्बूलदध्यादिभोगं परगृहे गमम् । प्रवेशं स्वगृहे पुंसो गेहैकाकित्वनिर्गमम् ॥ २७२ ॥ दुःशीलललनासङ्गं दर्पणो-पानदादि च । तपोदेवगुरूपास्तिपरा त्यजति साऽनिशम् ॥२८४॥ योगिनीव परात्मानं ध्यायन्ती पतिमेव सा । क्षेमार्थमर्चते चास्य कुलदेवीं सदादृता ॥ २८५ ॥ कुर्वाणा शान्तिकादीनि पूजयत्यध्वदेवताः । समभावामरादिभ्यो मन्यते चोपयाचितम् ॥ २८६ ॥ नित्यं विलोकते काकरुतादिशकुनानि च । पथिकादीन् भुजिष्यास्यैस्तत्प्रवृत्तिं च पृच्छति ॥ २८७ ॥ आलिख्य सारसादीनां युग्मानि पतिमीक्षते । शेते भूमावुपश्वश्रु भर्तृनाम्ना च बुध्यते ॥ २८८ ॥ बिभर्ति जीवितं भर्तुः केवलं सङ्गमाशया । व्यतिक्रामति कालं तद्गुणग्रहकथादिभिः ॥ २८९ ॥ पञ्चभिरर्थतः कुलकम् ॥ इति दास्या मुखात् श्रुत्वा विस्मयानन्दमेदुरः । कल्याणमूर्तिरौ-हिष्ट कथं शीलं कुलादृते ? ॥ २९० ॥ स्नेहाद्गुणानुरागाद्वा नारी नेष्टपतिं त्यजेत् । पतिं विनाऽपि तारुण्ये तस्याः शीलं तु चित्र-कृत् ॥ २९१ ॥ यदुक्तम्—

" किं चित्रं यदि दण्डनीतिनिपुणो राजा भवेद्धार्मिकः किं चित्रं यदि वेदशास्त्रविदुरो विप्रो भवेत्सत्क्रियः ।
तच्चित्रं यदि रूपयौवनवती साध्वी भवेत् कामिनी तच्चित्रं यदि निर्धनोऽपि कुरुते पापं पुमान्नापदि ॥ १ ॥ "

परीक्षिष्ये ततस्तस्याः शीलमौपयिकैः स्वयम् । ध्यात्वेत्युवास श्रीदेव्या गृहाभ्यर्णेऽथ स क्वचित् ॥ २९२ ॥ कथंचिदन्यदोपायाद् दृष्ट्वाऽनङ्गवती स च । सद्यः स्मरवशीभूतस्त्यक्तधर्मा व्यचिन्तयत् ॥२९३॥ भोक्तुरस्या विधिः पुण्यैर्निधायैतामिह ध्रुवम् । अवञ्चयत देवीभिरेतद्रूपतुषैः सुरान् ॥२९४॥ यदि भुञ्जेऽनया भोगानेकशोऽपि कथञ्चन । तदा मे सफलं जन्मान्यथा तु मरणं वरम् ॥ २९५ ॥ ततो गीतकलाविज्ञः स्मरोज्जागरणौपधम् । तथा गायत्ययं चारु सा शृणोति यथाऽनिशम् ॥ २९६ ॥ एषोऽन्तरान्तरोपायैः कैश्चिदागत्य तद्गृहम् । स्वं कृतानेकसंस्कारं रूपं दर्शयते च ताम् ॥२९७॥ तां वशां स्ववशां चैवं मन्यमानोऽन्यदा निजम् । चित्तमज्ञापयद्दास्या धिक् चक्रे तां च तं च सा ॥२९८॥ एवं च बहुशो जाते लोभयित्वाऽन्यदा धनैः । स परिव्राजिकामेकां प्रैषीदक्षां तदन्तिके ॥२९९॥ सा तां स्माह कुलस्त्रीणामप्येकस्मिन् गते धवे । न दुष्यत्यपरो वेश्यासुतायास्तव किं पुनः ? ॥ ३०० ॥ यदुक्तं लौकिके शास्त्रे—

" पत्यौ पव्रजिते क्लीवे प्रनष्टे पतिते मृते । पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥ १ ॥ "

ततः प्रार्थयमानोऽयं नावमान्यः स्मराकृतिः । यूनाऽनेन हि सम्भोगः सकृदप्याप्यते शुभैः ॥ ३०१ ॥ दुर्वारं तं विना शिक्षां मत्वोचेऽनङ्गवत्यथ । शीलभङ्गात् स्त्रियो भद्रे ! पच्यन्ते नरकाग्निषु ॥ ३०२ ॥ तदुक्तम्—

" दारिद्दुक्खवाही अप्पाउकुरूवयाइँ असुहाइं । निरयंताइ वि वसणाइं विगलिअसीलाण परलोए ॥१॥ " इति ॥

तथाऽप्यकार्यं कार्यं चेत्तल्लोभेनैव भूयसा । । उच्छिष्टान्नं हि भुञ्जीत कः स्नेहेन विना सुधीः ? ॥ ३०३ ॥ तद्दीनारायुतान्
पञ्च प्रागेव प्रेषयेत्स चेत् । तावतश्चागतो दत्ते तदभ्येत्वह्नि पञ्चमे ॥ ३०४ ॥ तत्सर्वं प्रतिपद्याथ गत्वाऽऽख्यत्कामुकस्य सा । सोऽपि
द्राक् तत्करेणोक्तान् दीनारान् प्राहिणोन्मुदा ॥३०५॥ नीत्वा चत्वारि कामार्तो दिनानि च कथञ्चन । पञ्चमे सोऽर्हसामग्र्या तस्या
गेहेऽगमन्निशि ॥ ३०६ ॥ अथानङ्गवती श्वश्र्वास्तदुक्त्वाऽनुमता तया । अखानयन्नरैराप्तैर्गूढं कूपं गृहान्तरा ॥३०७॥ तन्तुव्यूतं च
सा तल्पं दुकूलाच्छादितं वरम् । दक्षा तस्योपरि न्यस्य तस्थौ द्वारे निजौकसः ॥३०८॥ साऽथ तस्यागतस्यार्हप्रतिपत्त्या प्रमोदिनः ।
यथोक्तं धनमादाय पल्यङ्कं तमदीदृशत् ॥ ३०९ ॥ हृष्टः सरभसं सोऽथ तद्रूपैकनिविष्टदृग् । तमध्यास्त स्मरार्तस्य विचारो हि प्रण-
श्यति ॥ ३१० ॥ सद्योऽपतत् स कूपान्तः किमिदं किमिदं ब्रुवन् । कामी हि रज्यते नार्यां तद्रक्तश्च पतत्यधः ॥३११॥ बाध्यमान-
मथानङ्गवती तं क्षुत्तृडादिभिः । उपैक्षिष्ट त्र्यहं सैव चिकित्सा हि स्मरज्वरे ॥ ३१२ तुर्यघस्रेऽथ दासीभिः कर्षयित्वा गतौजसम् ।
बन्धयित्वा च वाःपानादिना स्वस्थीचकार तम् ॥ ३१३ ॥ तद्भालेऽलीलिखत् साऽथ दासोऽयं धनधर्मणः । इति वर्णावलीं वह्नि-
तप्तलोहशलाकया ॥ ३१४ ॥ तमथानङ्गवत्यूचे भद्रान्यस्त्रीरिरंसया । अत्राप्यलभथा दुःखं नरके प्रेत्य चाप्स्यसि ॥ ३१५ ॥
पापाद्विरम तन्नोचेदर्पयिष्यामि भूपतेः । मत्याद्यत्ताशयः सोऽथ जगौ सानुशयो भृशम् ॥ ३१६ ॥ धन्ये ! सतीषु रेखासि नात्र पापे
रमे पुनः । मुञ्च मां भ्रातृजायेऽस्मि सखा यद्धनधर्मणः ॥ ३१७ ॥ आनेष्ये त्वत्पतिं मुक्तस्तं पुरात् पाण्डुवर्धनात् । कार्यादत्रागतः
प्रापं सुहृद्द्रोहादिजं फलम् ॥ ३१८ ॥ साऽथ श्रुत्वेत्यनिर्वाच्यानन्दोत्कण्ठा रसाकुला । तं विमोच्याख्यदेवं चेत्तदागः सह देवर !
॥ ३१९ ॥ भोजयित्वा च तं पत्युः श्रुत्वोदन्तं च तन्मुखात् । श्रीदेव्यास्तं निवेद्याशु हर्षाद्वैतं ततान सा ॥ ३२० ॥ हर्षकोलाहलो

यावत्तद्गृहे स्फायतेऽभितः । तावत्कल्याणमूर्तिर्द्राग् निर्ययौ ह्रीभयादिना ॥ ३२१ ॥ क्रमात् स्तुवन् गुणांस्तस्याः स पुरं पाण्डुवर्धनम् । अभ्येत्य प्रणतो हर्षात्तस्वजे धनधर्मणा ॥ ३२२ ॥ सोऽथ प्रोचे चिरादागाः किं ? वन्धो ! किं च दुर्बलः ? । भालार्धं शीर्षवस्त्रेण किं वाऽऽच्छादितवानसि ? ॥ ३२३ ॥ स्मित्वा कल्याणमूर्तिस्तं सर्वोदन्तमथावदत् । श्रुत्वा तं धनधर्माऽपि हर्षाश्चर्यमयोऽभवत् ॥ ३२४ ॥ श्रुत्वा वियोगदुःखं च मातृपत्न्योः स्वनिर्मितम् । इयेष ते सुखाकर्तुं प्रियावृत्तं स्तुवन् मुहुः ॥ ३२५ ॥ सोऽथापृच्छय वणिक्पुत्रं सह तस्यापि सूनुना । द्विचत्वारिंशतं कोटीर्मेलयित्वाऽधिकाः श्रियः ॥ ३२६ ॥ महासार्थपरीवारः सुमुहूर्तेऽचलत्ततः । क्रमात्ख्याति भजंश्चाप विजयस्थलपत्तनम् ॥ ३२७ ॥ अथाऽऽगतं तं स्वजना निबुध्य निवेद्य भूपाय च तत्प्रवृत्तिम् । गजातपत्राद्यधिगृह्य तेन स विस्मयानन्दवशेन दत्तम् ॥ ३२८ ॥ गजाधिरूढं विधृतातपत्रं वाराङ्गनाचालितचामरौघम् । आतोद्यनादध्वनितान्तरिक्षं पदे पदे याचकदत्तदानम् ॥ ३२९ ॥ विलोक्यमानं नयनाब्जलक्षैः प्रशस्यमानं मुखकोटिभिश्च । धृतेन्द्रशोभं नतदेवसाधुं प्रावीविशत् स्वस्य पुरे गृहे च ॥ ३३० ॥ विशेषकम् ॥ प्रणम्य मातुः स पदौ यमापदानन्दमस्यैव हृदः स गम्यः । आलिङ्ग्य पुत्रं ददती सदाशीःशतानि साऽप्याप सुखं स्ववेद्यम् ॥ ३३१ ॥ संतोष्यमानदानाद्यैर्वान्धवान् स्वजनांस्तथा । नागरान् याचकांश्चाथ यथार्हं विससर्ज सः ॥ ३३२ ॥ भक्त्या मातुः समर्प्याथ स्वजनादिकृतोपदाम् । मेलनोत्कण्ठुलोऽनङ्गवत्याः सोऽन्तर्गृहं गतः ॥ ३३३ ॥ पद्मिनीमिव हिमग्लपिताङ्गीं ग्रीष्मशोपितरसामिव वल्लीम् । भानुनेव विधुरां विधुलेखां तां प्रियामथ ददर्श कृशाङ्गीम् ॥ ३३४ ॥ स्वकृतेन वियोगेन तद्वैधुर्यं विमृश्य सः । तदाचारं च संवीक्ष्य खेदानन्दावगात्समम् ॥ ३३५ ॥ तां स्नेहामृतधारालैः कटाक्षैस्तापहारिणीम् । कादम्बिनीमिवावेक्ष्य शिखीवाप परां मुदम् ॥ ३३६ ॥ साऽपि चन्द्रं चकोरीव मयूरीव घनागमम् । ध्यायत्यक्षिसुधावर्षं तं वीक्ष्याभ्यु-

त्थिता मुदा ॥ ३३७ ॥ अहो ! मे प्रोषितं पापैः पुण्यैर्जागरितं चिरात् । तुतुषुर्देवताश्चाद्य सोपयाचितमर्चिताः ॥ ३३८ ॥ मनो-
रथसहस्रैश्चेज्जातो नेत्रातिथिः प्रियः । स्मरस्यत्रापि चेद्दासी नाथ ! त्वां तद्वरं वरम् ॥ ३३९ ॥ ससंभ्रमं वदन्त्येवमभ्युपेत्याशु
तत्पदोः । पपात क्षालयन्ती तौ कदुष्णैर्नेत्रवारिभिः ॥ ३४० ॥ कलापकम् ॥ त्वदेकगतिकां स्निग्धां निर्मन्तुं मां किमत्यजः ? । कृतं
पोडशकोटीभिः किमकाण्डेऽच्छिदः सुखम् ? ॥ ३४१ ॥ त्वद्वियोगजनितं हृदि दुःखं किन्तु मे सहवसन्नपि नावैः । दूरनीवृति चिरं
हि गतोऽपि त्वं हृदि स्थिरतरोऽसि सदा मे ॥ ३४२ ॥ संस्पृशन्नपि वहिर्हृदयं मे यत्पुरा सुखमचिन्त्यमकार्षीः । त्वं ततः शत-
गुणं प्रवसंस्तन्मध्यगोऽपि किमदाः प्रिय ! दुःखम् ? ॥३४३॥ एवं सगद्गदालापां दोर्भ्यामुत्थाप्य सोऽपि ताम् । आलिलिङ्ग दृढं प्रेम्णा
चुम्बन्नास्ये मुहुर्मुहुः ॥ ३४४ ॥ कलापकम् ॥ चिरादसंस्कृतं चाङ्गं स्नपयन्नेत्रवारिभिः । वियोगाग्निभवं तापं तस्या निर्वापयन्निव
॥ ३४५ ॥ स जगौ मा विषीद त्वन्मातुर्वैगुण्यमात्रतः । अपरीक्ष्य तवाचारं स्नेहं च प्रावसं तदा ॥ ३४६ ॥ युग्मम् ॥ सुभगे !
तत्क्षमस्वैतन्ममागो गुणसुन्दरि ! । नातः परं करिष्ये तत् शोचामि स्वं यतोऽधुना ॥३४७॥ साऽपि स्नेहं निबुध्यैवं भर्तुर्दृढमकृत्रिमम् ।
महानन्दमयीभूतोत्फुल्लनेत्राननावदत् ॥ ३४८ ॥ इदं चेत् प्रिय ! तत्त्वं तद्रेखा नारीषु मेऽभवत् । मा स्वं शोचीर्यतः कर्म ममैवात्रापरा-
ध्यति ॥ ३४९ ॥ किञ्च—विप्रयोगाग्निना दह्यमानाऽप्यमृतमूर्तिना । अद्ययावत्त्वयैवास्मि जीविता हृदि तिष्ठता ॥ ३५० ॥ इत्या-
द्यालापपीयूषे मिथः पीतेऽथ सोऽक्षिपत् । तस्या रत्नावलीं कण्ठे मनोवृत्तिमिवामलाम् ॥ ३५१ ॥ तेन भर्तृप्रसादेन लब्धराज्येव
साऽतुषत् । संतोष्य परिवारादि सोऽपि स्नानादिकं व्यधात् ॥ ३५२ ॥ अथोपदादिसंतुष्टनरेन्द्रकृतसत्कृतिः । चैत्येष्वष्टाह्निकापूजो-
त्सवमर्चन् गुरून् व्याधात् ॥३५३॥ चित्रैर्विधापनैर्नव्यनव्यैः स स्फूर्जदुत्सवम् । अत्यगात्कियतो घस्रान् दानसम्मानभासुरान् ॥३५४॥

अन्यदा श्वशुरावासे गत्वा सम्मानपूर्वकम् । आनैषीत्कुलपत्नीं स सुदिने प्रियदर्शनाम् ॥ ३५५ ॥ स तामप्यनुनीयाथानङ्गवत्यनुसारतः । वस्त्रालङ्कारमाल्याद्यैः सत्कृत्यातूतुपत् सतीम् ॥ ३५६ ॥ ते च द्वे अपि चक्राते पत्यादेशान्मुदा तदा । मज्जनाद्यङ्गसंस्कारं क्रमान्मिष्टेष्टभोजनम् ॥३५७॥ रतिप्रीतिसमाभ्यां स युतस्ताभ्यामिव स्मरः । सर्वकामगुणोपेतं भेजे वैषयिकं सुखम् ॥३५८॥ प्राप्तैर्वणिक्सुतादिभ्यो न्यायैर्द्रव्यैस्तथाऽर्जितैः । षट्पञ्चाशदथास्यासन् गृहे कोट्यस्तदा श्रियाम् ॥ ३५९ ॥ स प्रसिद्धिं प्रशंसां चाभूपगोपं क्रमाद्व्रजन् । त्रिवर्गसाधने नातिचक्रामानेहसं बहुम् ॥३६०॥ चैत्यान्यचीकरत्साधून् सङ्घं चानर्च सोऽनिशम् । दीनादिषु ददौ चैवं पुण्यान्यन्यान्यपि व्यधात् ॥३६१॥ प्रियदर्शनया जाताः क्रमात्पुत्रा गुणोत्तराः । सत्कलारूपलावण्यभोगभाजश्च तेऽभवन् ॥३६२॥ सप्तक्षेत्रीस्ववापादिश्राद्धधर्मादथोत्तमात् । स्वःशर्म समये प्राप श्रीदेवी सुसमाहिता ॥३६३॥ अन्यदा तत्पुरोद्याने केवली समवासरत् । सह भूपेन तं नन्तुं सोऽप्यगात् सपरिच्छदः ॥ ३६४ ॥ तं नत्वा च यथास्थानमासीनेषु नृपादिषु । सदेवासुरमर्त्येषु स धर्मं भगवान् जगौ ॥ ३६५ ॥

इहाप्यमुत्रापि च सर्वदुःखहृत् समीहिताशेषसुखर्द्धिकृच्च यः । सदा सहायः स्वगृहे वनेऽर्णवे स जैनधर्मः स्वहिताय सेव्यताम् ॥ ३६६ ॥ मलानिवाम्भः सकलानघौघान् सुधेव रोगांश्च निहन्ति विघ्नान् । फलान्यशेषाणि सुरद्रुवद्यो दत्ते च सौख्यानि जिनेन्द्रधर्मः ॥ ३६७ ॥ स भावतोऽत्युग्ररसो रसाङ्गवद् द्रुतं भवेऽत्रापि फलत्यभीप्सितैः । परश्रिराच्चौषधपादपादिवत् फलादधर्मोऽपि विषादिवत्तथा ॥ ३६८ ॥ विभाव्य लक्ष्मीं स्वजनाङ्गकादींस्त्राणाप्रगल्भान् क्षणभङ्गुरांश्च । भेदद्वयेऽतोऽन्यतरो जिनोक्तो धर्मः शिवश्रीप्रतिभूर्निषेव्यः ॥ ३६९ ॥

धनधर्मा निशम्यैवमप्राक्षीदिति मे प्रभो ! । अभुवन् कर्मणा केन संविज्ञाः सुखसंपदः ॥ ३७० ॥ इयं जाता कुले हीने कुतोऽनङ्गवती सती । आवयोश्च मिथः स्नेहो दृढोऽयं केन हेतुना ? ॥ ३७१ ॥ केवली तमथोवाच ब्रुवे वां प्राग्भवं शृणु । कर्माणि यत्कृतान्येव फलन्ति स्म फलैरिह ॥ ३७२ ॥ तथाहि—

त्रिगर्तविषयेऽत्रैव पुरस्यास्यैव चान्तिके । शालिशीर्षेऽभवद् ग्रामे सुमित्रः कुलपुत्रकः ॥ ३७३ ॥ भद्रकप्रकृतेरस्य मध्यान् प्रदधतो गुणान् । तादृश्येव प्रिया जज्ञे देविलाह्वा पतिव्रता ॥३७४॥ तयोर्मध्येन भावेन दीनदानादि कुर्वतोः । गते सुखं बहौ कालेऽन्यदा कस्मिंश्चिदुत्सवे ॥ ३७५ ॥ अपाचि पायसं गेहे भुक्त्यै चोपाविशत्पतिः । पर्यवेपि च तत्पत्न्या यावद्भुङ्क्ते च नैव सः ॥ ३७६ ॥ आगमत्तपकस्तावद् विजयस्थलपत्तनात् । प्राविशत्तद्गृहे भाग्यान्मासक्षपणपारणे ॥ ३७७ ॥ विशेषकम् ॥ तं समीक्ष्य मुदा जातश्रद्धस्तस्मै स भक्तिभाक् । परमान्नमदादर्द्धं शुद्धं मत्वाऽग्रहीन्मुनिः ॥ ३७८ ॥ दत्त्वाऽऽशिषं मुनिर्यावद् याति तावत्स दध्यिवान् । अल्पमेतन्मुनेर्मिश्रं तत्कदन्नैर्विनङ्क्ष्यति ॥३७९॥ ततस्तेन प्रियादिष्टा हृष्टा साऽऽमन्त्र्य तं मुनिम् । ददौ श्रद्धातिरेकेण पायसं भाजनाद्बहु ॥३८०॥ जुगुप्सां च मनाक् चक्रे वीक्ष्याङ्गे सा मलं मुनेः । नृभोगफलकर्मार्जि ताभ्यां शुद्धाच्च दानतः ॥३८१॥ ततः प्रभृति भोगादि किञ्चिच्च वहृधे तयोः । दानानुमोदना चक्रे ताभ्यां बोधिफला ततः ॥३८२॥ तत्र मन्त्रादिवित्कश्चित् परिव्राडन्यदाऽऽगमत् । मासान्ते भिक्षया भुङ्क्ते स चाद्यैकगृहाक्षया ॥ ३८३ ॥ सुमित्रस्तत्तपोयोगमन्त्राद्यै रञ्जितोऽथ तम् । निमन्त्र्याबूभुजद्भक्त्या मासक्षपणपारणे ॥ ३८४ ॥ तत्संसर्गोपदेशाद्यैर्मनाग् मिथ्यात्वमाश्रितौ । अवज्ञां तौ च चक्राते दम्पती जिनशासने ॥ ३८५ ॥ राजर्षिर्भुवनानन्दस्तत्रोद्यानेऽन्यदा स्थितः । तपस्यन्निर्ममो देहेऽपीत्यभिग्रहमादधे ॥३८६॥ पादालम्बिहयद्वन्द्वः पुमान् देशान्तरागतः । धूलिधूसरसर्वाङ्गः

श्रान्तो यामे तृतीयके ॥ ३८७ ॥ एको दत्तकपाटे स्वगृहद्वारे क्षुधार्दितः । आसीनो हयपर्याणे पाणिस्थं वार्तयन् शुकम् ॥ ३८८ ॥
यदा दास्यति सावज्ञं सिंहकेसरमोदकान् । तदैव पारयिष्यामि तपो मेऽस्त्वन्यथा सदा ॥ ३८९ ॥ ततो गोचरचर्यायां स भ्राम्यन्न-
न्यदाऽगमत् । सुमित्रस्य गृहे देशान्तरं जिगमिषोस्तदा ॥ ३९० ॥ वहुधाऽदापयत्तस्मै भिक्षां पत्न्या स चादरात् । मौनी सोऽभिग्रही
साधुस्तमनादाय चागमत् ॥ ३९१ ॥ मन्यमानौ गतं रिक्तं दम्पती तममङ्गलम् । अबुद्ध्वा कारणं तत्र न्यत्यूचाते समत्सरौ ॥३९२॥
मौनदम्भजुषामेषां किं जैनयतिनां व्रतम् ?। उपकारमुचो लोके निर्दाक्षिण्याश्चरन्ति ये ॥ ३९३ ॥ ततो देशान्तरे गत्वा सुमित्रोऽथा-
र्जितैर्धनैः । आगादादाय जात्यश्वौ स्वगृहे मासि सप्तमे ॥ ३९४ ॥ जायमाने विवाहे च तदा तन्मित्रमन्दिरे । देविला स्वगृहद्वारं
पिधायागात्सकुञ्चिका ॥३९५॥ मत्वा तत्प्रातिवेश्मिक्याः प्रेष्य पत्न्यै च तामथ । सुमित्रः स्वगृहद्वारेऽध्यास्त पर्याणमर्वतः ॥ ३९६॥
यावत्तृतीययामेऽह्नो रज्जुमालम्ब्य वाजिनोः । शुकं देशान्तरानीतं करस्थं वार्तयत्ययम् ॥ ३९७ ॥ तावदुग्रतपःक्रान्तगात्रोत्सर्प्पन्महा-
महाः । स एवागान्मुनिस्तत्र भ्राम्यन् गोचरचर्यया ॥ ३९८ ॥ मङ्गलं मेऽधुना दानमिति तेन न्यमन्त्र्यत । स माग्रोषेण सावज्ञं
शम्बलाकृष्टमोदकैः ॥ ३९९ ॥ विभाव्याभिग्रहं पूर्णं विशुद्धिं चाददे स तान् । मुनिः सप्तममासेऽथ पञ्चाश्चर्यी सुरा व्यधुः ॥४००॥
तावत्तत्र प्रियाऽऽप्यस्य देविलोत्कण्ठिताऽऽगमत् । मुनिदानादि सोऽप्याख्यत्तस्यै हृष्टाऽथ सा जगौ ॥४०१॥ स्वामिन् ! धन्यस्त्वमे-
वासि यन्नृदेवासुरार्चितम् । इमं साधिकषण्मास्या महामुनिमपारयः ॥ ४०२ ॥ अयं हि नृपमन्त्र्याद्यैरज्ञातैतदभिग्रहैः । निमन्त्रि-
तोऽपि वहुधा नाद्ययावदपारयत् ॥ ४०३ ॥ तन्मन्येऽभिग्रहोऽस्याद्य त्वद्भाग्यात्कोऽपि पूर्णवान् । उपस्थितं च कल्याणमावयोरिष्ट-
सिद्धियुक् ॥ ४०४ ॥ भूपाद्या अपि तत्राथ मिलितास्तं मुदाऽस्तुवन् । तेन तैश्च तया चर्षिर्ययौ भक्त्या नतस्तुतः ॥ ४०५ ॥

जातश्रद्धः सुमित्रोऽथ स्वदानमनुमोदयन् । द्राक् पत्न्योद्घाटितद्वारे मुदितः प्राविशद्गृहे ॥४०६॥ दानानुमोदनापुण्यैर्नृभोगफलकर्मणः ।
तयोर्बन्धोऽभवद्भक्तिस्तदादि च जिनर्षिषु ॥ ४०७ ॥ द्वितीयेऽहनि विज्ञाय मुनेर्व्यक्तमभिग्रहम् । जातौ श्रुत्वोपदेशं च तौ त्यक्ता-
न्यमतभ्रमौ ॥ ४०८ ॥ अथ चाऽऽयुः प्रपूर्यासीः सुमित्रस्त्वं नृभोगभाक् । भुक्त्वा प्राग्दानपुण्यं तु जैनद्वेषाच्च दुःखितः ॥ ४०९ ॥
पुनर्दानजपुण्याच्च तातादिष्टात्तथैहिकात् । कृताद्धर्मचतुष्कात्ते वाञ्छितान्यभवन्पुनः ॥ ४१० ॥ तादृक्पात्राय तद्दानं स्याच्छिवायापि
भक्तितः । किञ्चिद्व्रीडाप्रदत्तत्वान्नरभोगफलं त्वभूत् ॥ ४११ ॥ नृभवायुः प्रपूर्याथ देविलाऽनङ्गवत्यभूत् । जुगुप्सया मुनेर्वेश्याकुले च
समजायत ॥ ४१२ ॥ तवैव सान्तरात् पुण्यात्तस्या अपि फलं तथा । प्राग्भवस्य च संस्कारात् स्नेहोऽभूद्युवयोः परः ॥ ४१३ ॥
पूर्वधर्मानुरागाद्यैः सदाचारे रतिर्भृशम् । बोधिसामग्र्यवाप्तिश्च बभूवेह द्वयोरपि ॥ ४१४ ॥ पुण्यस्याल्पीयसोऽप्येवं महद्वीक्ष्य फलं
ततः । इमां चावाप्य सामग्रीं यतध्वं तद्विधौ बुधाः ! ॥ ४१५ ॥

निशम्येति गुरोर्वाचः स्मृत्वा जातिं तथाऽऽत्मनः । दम्पती तौ प्रबुद्धौ द्राक् प्रियदर्शनया सह ॥ ४१६ ॥ धनशर्मा गुरुं नत्वा
गत्वा च निजमन्दिरम् । जगौ पत्न्यौ भवाद्भीतो न भोगेषु रतिं लभे ॥ ४१७ ॥ भवतीभ्यामनुज्ञातः प्रव्रजिष्याम्यहं ततः । दुर्लभं क्षीण-
पुण्यानां यत्सुखं प्रेत्य देहिनाम् ॥ ४१८ ॥ ऊचतुस्ते च नादृष्टं किञ्चिदस्ति भवेऽत्र यत् । त्वयामा प्रव्रजिष्यावस्त्वरस्वात्महिताय तत्
॥ ४१९ ॥ हृष्टः सोऽथ निजे न्यस्य पुत्रान् स्वत्राणधीः पदे । बन्धून् मित्राणि चापृच्छ्य विज्ञाप्य च महीपतिम् ॥४२०॥ देशेऽप्य-
मारिमुद्घोष्य सर्वचैत्येषु भक्तितः । कृत्वा चाष्टाह्निकापूजां गुरून् सङ्घं प्रपूज्य च ॥४२१ ॥ दत्त्वा दीनादिदानानि त्यक्त्वा सर्वं परि-
ग्रहम् । जग्राह सह पत्नीभ्यां दीक्षां सर्वविदोऽन्तिके ॥ ४२२ ॥ तपस्तप्त्वा चिरं रत्नत्रयमाराध्य चाममाः । त्रयोऽपि सुरसद्मापुः

सर्वकाममनोहरम् ॥ ४२३ ॥ एवं नरामर्त्यभवान् विशिष्टत्रिवर्गसंपद्विशदानवाप्य । त्रयोऽपि कर्मारिजयश्रियाढ्याः शिवं ययुः सप्तमजन्मनीमे ॥४२४॥ धनधर्मकथामेतामब्दे वेदेभमनुमिते १४८४ऽकार्षीत् । श्रीमुनिसुन्दरसूरिर्बोधाय सतां जयश्र्यङ्काम् ॥४२५॥ एवं ये पात्रदानं व्यवहृतिममलां देवगुर्वोश्च पूजां पोषं साधर्मिकाणां विदधति सुधियः शीलमुख्यांश्च धर्मान् । प्राप्यात्राभीप्सितार्थान् नरसुरभवगान् मङ्गलश्रेष्ठिसूनोर्ज्ञातात्तद्धार्ययोश्चाक्षरमपि विजयश्रीभृतस्ते लभन्ते ॥ ४२६ ॥

॥ इति तपावृहच्छाखामण्डनयुगोत्तमावतारश्रीदेवसुन्दरसूरिश्रीज्ञानसागरसूरिश्रीसोमसुन्दरसूरिशिष्य-
श्रीमुनिसुन्दरसूरिकृता श्रीदानादिपुण्यफले धनधर्मकथा ॥



॥ अर्हम् ॥

## ॥ श्राद्धधर्माराधनविराधनयोः सिद्धदत्तकपिलकथा ॥

जयश्रीणां निवासाय सर्वज्ञज्ञानशालिने । दर्शिने तत्त्वरत्नानां विश्वार्च्याय नमोऽर्हते ॥ १ ॥ ऐहिकामुष्मिकप्रेयःश्रेयःप्राप्तिनिबन्धनम् । कुर्यादात्महिताकाङ्क्षी धर्ममेवार्हतं बुधः ॥ २ ॥ आस्रवेभ्यो विरत्या स देशतः सर्वतोऽपि वा । पञ्च हिंसानृतस्तेयाब्रह्ममूर्च्छात्मकाश्च ते ॥ ३ ॥ गृही स्याद्देशतस्तेभ्यो विरतः सर्वतो यती । सुरलोकस्य मुक्तश्च तद्भवेऽपि गमी श्रियम् ॥ ४ ॥ यतिधर्मासक्तस्तच्छुद्धव्यवहारमुख्यगृहिधर्मम् । यो भजते स हि लभतेऽभीष्टसुखं सिद्धदत्त इव ॥ ५ ॥ यः पुनरधमो मोहाद्धर्मं ह्यवमन्यते कुमतिरेवम् । स चिरं भ्रमति भवाब्धौ कपिल इवात्यन्तदुःखहतः ॥ ६ ॥ तथाहि—

जम्बूद्वीपे विदेहेऽस्ति विजयः पुष्कलावती । विशालपुरमित्यस्मिन् विशालश्रिपुरं पुनः ॥ ७ ॥ अभूतां वणिजौ तत्र सुहृदौ श्राद्धवंशजौ । प्रथमो मातृदत्ताह्वो वसुदत्ताभिधः परः ॥ ८ ॥ गृहीत्वाऽणुव्रतान्याद्यो गुरूपान्तेऽन्यदा सुधीः । व्यवहारविशुद्ध्यैव हट्टे व्यवहरेत्सदा ॥ ९ ॥ नामश्राद्धो द्वितीयस्तु कूटमानतुलादिभिः । निवारितोऽपि मित्रेण कुधीर्व्यवहरेत्सदा ॥ १० ॥ अन्यदाऽऽत्तकियद्भाण्डाविमौ व्यवजिहीर्षया । प्राप्तौ पाण्डुपुरे तत्रोद्याने सार्थेन तस्थतुः ॥ ११ ॥ वसुतेजा नृपस्तत्रालुब्धं श्रीगृहिकं तदा । विलोकयन् परीक्षार्थं हारमध्वन्यमूमुचत् ॥१२॥ लतागुल्मे तदीक्षार्थं नरांश्च स्वानतिष्ठिपत् । तं जिघृक्षुं च ते दृष्ट्वा निषेधन्ति क्षुतादिना ॥ १३ ॥ अन्यदा तौ पुरं यान्तौ वणिजौ तमपश्यताम् । विजनत्वाद् ग्रहीतुं च वसुदत्तोऽभ्यगान्मुदा ॥ १४ ॥ विषमेतदिहामुत्रा-

नर्थकृद्धर्मघाततः । इत्युक्त्वा वारितो मातृदत्तेनाचलदग्रतः ॥ १५ ॥ स्वयंवरां श्रियं मित्रदाक्षिण्यादमुचं कथम् ? । स ध्यात्वेति कृतव्याजो व्यावृत्त्य द्राक् तमग्रहीत् ॥ १६ ॥ वद्धो नृपभटैः सोऽथ तद्भाण्डोद्दालनं कृतम् । ज्ञात्वा तन्मातृदत्तस्तं स्वभाण्डैरप्यमोचयत् ॥ १७ ॥ अमुञ्चन्तः समाश्वास्य तौ भूपस्यार्पयंस्तु ते । न्यवेदयन्तोदन्तं च लोभालोभादिकं तयोः ॥१८॥ मातृदत्तं नृपोऽपृच्छद्धारं किं न त्वमग्रहीः ?। स जगौ व्रतभङ्गस्य भीत्याऽथ मुमुदे नृपः ॥ १९ ॥ चक्रे श्रीगृहिकं तं च भूपः सत्कारपूर्वकम् । ददौ चाजीवितं भोग्यां तस्मै वृत्तिं च निस्तुषाम् ॥ २० ॥ तद्गिरा वसुदत्तं च सभाण्डं व्यमुचन्नृपः । सिद्धसाध्योऽथवाऽऽपृच्छ्य मित्रं स स्वपुरेऽगमत् ॥ २१ ॥ कुटुम्बं मातृदत्तोऽथानीयपाण्डुपुरे सुखी । मध्येन श्राद्धधर्मेणाजीगमत्समयं बहुम् ॥ २२ ॥ राज्ञः प्रौढे प्रसादेऽपि स्वाधीने श्रीगृहेऽपि च । तृतीयं न बभञ्जाणुव्रतं सोऽन्यान्यपि क्वचित् ॥ २३ ॥ लोके ख्यातिं प्रशंसां च क्रमादापोत्तरोत्तराम् । सैवं मध्यगुणोऽथायुःपूर्तौ तं देहमत्यजत् ॥२४॥ अथास्ति विजयेऽत्रैव चन्द्राभा पूर्गरीयसी । स्वर्गेण सर्वसाम्येऽपि याऽधिका धर्मसाधनैः ॥२५॥ महर्द्धिः श्रावकोऽत्राभूद्गुणी श्रेष्ठी पुरन्दरः । सती चास्य प्रिया नाम्ना गुणैश्च सुभगोत्तमा ॥२६॥ जीवोऽथ मातृदत्तस्य तस्याः कुक्षाववातरत् । जातश्च सुतरूपेण सुमुहूर्ते सुलक्षणः ॥२७॥ कुर्वन् महोत्सवांस्तुष्टः श्रेष्ठी तस्याभिधां व्यधात् । सिद्धदत्त इति प्राप वृद्धिं सर्वगुणः स च ॥२८॥ क्रमात् प्राज्ञः स जग्राह समये सकलाः कलाः । धर्मानुष्ठानविज्ञश्चाभवत् सर्वजनप्रियः ॥२९॥ रूपलावण्यसौन्दर्यैः स्त्रैणसंमोहनौषधम् । स प्राप यौवनं देवगुर्वोः पित्रोश्च पूजकः ॥३०॥ रतीशं धिक्चकारैष रूपेणास्मत्सखीप्रियम् । तमितीवाभितो जघ्नुः कटाक्षविशिखैः स्त्रियः ॥३१॥ तमन्वगुर्गतं यान्ति यान्तं तस्थुः स्थितं मिषैः । तस्येत्यनुव्रता रूपाकृष्टाः पौरस्त्रियोऽभवन् ॥ ३२ ॥ अहो ! लवणिमा तस्य यं पीत्वा पौरयोषितः । सर्वैरपि रसैः पीतैर्न यान्ति स्म वितृष्णताम् ॥ ३३ ॥ पिता विलोकते तस्य स्निग्धः कन्यां

गुणोत्तराम् । स च व्यवहरत्यट्टे जयद्भाग्यश्चतुष्पथे ॥ ३४ ॥ इतश्च वसुदत्तोऽल्पऋद्धिर्व्यवहरत्यलम् । पास्पर्धनमातृदत्तेन कूटमान-
तुलादिभिः ॥ ३५ ॥ तथाऽप्यप्राप्तवहर्द्धिर्मृत्वा जातो वने मृगः । हतः सिंहेन वङ्गालग्रामे चाभूद् द्विजाङ्गजः ॥ ३६ ॥ प्राप्तः कपिल
इत्याख्यां क्रमाद्वृद्धिं च सो गतः । तदभाग्यात्पितुः सर्वो विभवस्त्वगमत् क्षयम् ॥ ३७ ॥ यौवने च दरिद्रस्य द्विजस्य तनयामयम् ।
दुर्भगां पर्यणैपीद्यद्योगः कर्मवशात्समः ॥ ३८ ॥ जाताश्च कतिचिड्डिम्भास्तस्य स्वः पितरौ गतौ । स श्रिये कुरुते यद्यत्कर्म तन्निष्फलं
भवेत् ॥ ३९ ॥ पत्न्या कटुगिराऽऽक्रुष्टोऽन्यदा द्रव्यार्जनाय सः । संप्राप्तः कानने प्रोचे कृपयैकेन योगिना ॥ ४० ॥ वत्स ! द्रव्याय
किं भ्राम्यस्येवं दुःखी वनादिषु । चन्द्राभायां नगर्यां यदाशापूराऽस्ति देवता ॥ ४१ ॥ नामोचितगुणा दत्ते सा नृणां वाञ्छिताः
श्रियः । पुष्पपूजोपवासाद्यैर्गत्वाऽऽराधय तां ततः ॥ ४२ ॥ श्रुत्वैवं स मुदा तत्राऽभ्येत्याभ्यर्च्य च तां शुचिः । कुशसंस्तारके ध्यानी
तत्पुरोऽस्थादुपोषितः ॥ ४३ ॥ देवी निशि तृतीयायां जगौ किं विप्र ! लङ्घसि ? । सोऽवक् स्वामिनि ! याचेऽर्थं साऽऽख्यन्मे स
कदाऽर्पितः ? ॥ ४४ ॥ विप्रोऽवग् देवि ! विश्वस्याप्याशाः पूरयसि क्षणात् । प्रतारयसि किं मां तु भजाह्वां मयि सान्वयाम् ॥ ४५ ॥
देव्यूचे नास्ति ते भाग्यं कथं तदधिकं ददे ? । न भाग्यातिक्रमाद्दातुमीष्टे देवाधिपोऽपि हि ॥ ४६ ॥ द्विजोऽवक् तत्प्रतीच्छासून् निर्विण्णो
जीविताद्दहम् । अन्यत्राऽपि हि ते त्याज्या दत्तास्त्वत्पूजने वरम् ॥ ४७ ॥ सा निश्चित्य मुमूर्षुं तं स्वप्रभावक्षितेर्भयात् । प्रोचे तद्विप्र !
मत्पार्श्वेः प्रातरादय पुस्तिकाम् ॥ ४८ ॥ विक्रीणीष्वापणे पञ्च रूपकाणां शतानि च । लप्स्यसे नाधिकं याच्यमित्युक्त्वा सा तिरोदधौ
॥ ४९ ॥ युग्मम् ॥ पुस्तिकां प्रातरादाय सोऽपि भ्राम्यंश्चतुष्पथे । विक्रीणीते न दत्ते तु कोऽप्येकमपि रूपकम् ॥ ५० ॥ अथो
पुरन्दरश्रेष्ठिहट्टेऽभ्यागात्क्रमाद् द्विजः । आर्पयत् पुस्तिकां सिद्धदत्तस्याऽऽख्याय तत्कथाम् ॥ ५१ ॥ सोऽपि ताते स्थिते गेहे मूल्यं

दत्त्वार्थितं तदा। न मोघं देवतादत्तमितिबुद्ध्याऽग्रहीदिमाम् ॥ ५२ ॥ सकौतुकस्तत्र च पञ्चपत्रीं सद्वृत्तपादं च तदाद्यपत्रे। प्राप्तव्यमर्थं लभते मनुष्य इत्येकमालोक्य भृशं जहर्ष ॥ ५३ ॥ रूपकाणां सहस्रेणाप्ययं नूनं क लभ्यते ?। यथात्म्यं दर्शयन् विश्वस्येति सोऽचिन्तयन्मुदा ॥ ५४ ॥ कपिलोऽथाप्य तद्द्रव्यं हृष्टोऽयात् स्वपुरं प्रति। भिल्लैर्लुण्टितसर्वस्वोऽटव्यां बन्दीकृतो भ्रमात् ॥ ५५ ॥ चिरं कदर्थयित्वा च मुक्तः स्वाङ्गपरिच्छदः। पत्न्याऽऽक्रोशपदं जज्ञे यावज्जीवं सुदुःखितः ॥ ५६ ॥ यतः—

" विकटा अट पर्वताटवीस्तर वार्धीन् भज भूपतीनपि। अपि साधय मन्त्रदेवता न तु सौख्यं सुकृतैर्विनास्ति ते ॥१॥ "

पुस्तिकां वणिजो ये नाददिरे ते परेऽप्यथ। कौतुकान्मिलिता ज्ञात्वा तत्स्वरूपं मुदं दधुः ॥ ५७ ॥ नाहो ! व्यामूमुहद्देव्यादिष्टो धूर्तोऽयमद्य नः। बालं व्यामोहयत्सिद्धदत्तं चेत्यादि तेऽब्रुवन् ॥ ५८ ॥ जहसुस्तं खलाः केचिदहो ! वाणिज्यकौशलम्। अहो ! क्रयाणकं प्रौढमिति वादिततालिकाः ॥५९॥ श्रेष्ठिन् ! पुत्रस्तवैवात्र वारितोऽपि हितैषिभिः। पञ्चशत्याग्रहीत् किञ्चित्कुलं येनोद्धरिष्यति ॥ ६० ॥ इति लोकगिरा खिन्नः पिता पुत्रं गृहागतम्। पप्रच्छायव्ययं सायं पुस्तिकास्यादि सोऽप्यवक् ॥ ६१ ॥ तां दृष्ट्वैकपर्दी श्रेष्ठी क्रुद्धस्तावद्वचयाज्जगौ। वेत्सि द्रव्यार्जने दुःखं नान्योपार्जितभुग् जड ! ॥ ६२ ॥ स्तोकान् शास्त्रेष्वपाठीः किं पादान् श्लोकांस्तथेदृशान् ?। वृथैव व्ययन् द्रव्यं सर्वं मे नाशयिष्यसि ॥ ६३ ॥ तन्निर्याहि त्वमेव द्राक् सुतेभ्योऽपि वरं धनम्। तद्विना विघटन्ते ते विश्वं खिद्यति तेन च ॥ ६४ ॥ इति तातगिरा दूनः सिद्धदत्तः सपुस्तिकः। विना पञ्चसहस्रान्नैष्यामीत्युक्त्वाऽथ निर्ययौ ॥६५॥ पूर्द्वारं पिहितं वीक्ष्य निशि देवकुलेऽवसत्। निद्रां चाप स निश्चिन्तः पादार्थं भावयन् सुखम् ॥६६॥ अथ तत्र पुरि क्ष्मापमन्त्रिश्रेष्ठिपुरोधसाम्। सन्ति पुत्र्यो दृढप्रीतिबद्धाः सख्यः परस्परम् ॥ ६७ ॥ अतिदेवाङ्गनारूपाः प्राप्तसर्वकलाश्च ताः। यौवने भान्ति विश्व-

स्त्रीगुणसारैः कृता इव ॥६८॥ तासां नित्यावियुक्तानामित्यालापोऽन्यदाऽभवत् । संयोगसुखलीनानामियान्नः समयो ययौ ॥ ६९ ॥ अथागाद्यौवनं वैरि न विद्मः पितरस्ततः । क्वापि क्वापि सुदूरे नः प्रक्षेप्स्यन्ति पृथक् पृथक् ॥ ७० ॥ ऊचे राजसुतैवं चेत्कश्चनैकं मतं वरम् । कुर्मो दीयामहे यावत्पितृभिर्न पृथक् पृथक् ॥ ७१ ॥ एवमस्त्विति सख्युक्ते पुना राजसुताऽवदत् । सिद्धदत्ताभिधोऽत्रास्ति क्षत्रियः सुभगो युवा ॥७२॥ एकस्यां लेखशालायामपठाम वयं स च । राज्ञः सामन्तपुत्रोऽयं व्रियते यदि वो मतम् ॥७३॥ परिणीताश्च तेनामा गत्वा देशान्तरे द्रुतम् । भोगान भोक्ष्यामहेऽभीष्टान् संयुक्ता जीवितावधि ॥ ७४ ॥ ओमित्युक्तेऽथ सर्वाभिर्दास्यासाहूय तं रहः । भक्त्या प्रलोभ्य सर्वं तद्विमृष्टं प्रत्यपीपदत् ॥ ७५ ॥ आनयेस्त्वं रथं साश्वमानयामो धनं वयम् । कामदेवालये शुक्रपञ्चम्यां निशि चापतेः ॥७६॥ प्रतिपाद्येति तं प्रेष्य पराभ्यस्तन्न्यवेदयत् । स्वस्वगेहेषु ताः प्राप्तास्तत्सामग्रीमथो व्यधुः ॥७७॥ अथ स क्षत्रियो दध्यावासां पाणिग्रहे मम । स्वामिद्रोहो वियोगश्च पित्राद्यैः संशयोऽसुषु ॥ ७८ ॥ राजकार्यं तदुद्दिश्य त्यक्त्वाऽमूः राक्षसीरिव । यामि ग्रामान्तरे क्वापि वह्व्यो मे जीवतः स्त्रियः ॥ ७९ ॥ ततोऽसौ तद्दिने चक्रे तथैवाद्दष्टदिष्टधीः । हृष्टा च नृपजा प्राप्य रजनीं जननीमिव ॥ ८० ॥ साऽथ प्रस्तुतसामग्र्याऽऽदिमे यामे सचेटिका । पुरन्दरसुतोपेतमागात्कामसुरालयम् ॥ ८१ ॥ दासीं देवौकसो द्वारे संस्थाप्यान्तः प्रविश्य च । सिद्धदत्तागतोऽत्रासीत्येवं द्विस्त्रिर्जगाद सा ॥ ८२ ॥ प्रबुद्धः श्रेष्ठिसूः सोऽपि जगावस्मीति सा ततः । भूषणोद्द्योततो वीक्ष्यावध्नाद्धस्तेऽस्य कङ्कणम् ॥ ८३ ॥ उवाच मुदिता सा मां स्निग्धां परिणय द्रुतम् । पादार्थं भावयंस्तां सोऽथोपयेमे ससंभ्रमम् ॥८४॥ भाग्यात्स कामदेवोऽस्मै पञ्चरत्नीं च यौतके । कोटिमूल्यां ददौ वस्त्राञ्चले सोऽपि जुगूह ताम् ॥ ८५ ॥ जगौ सा पूर्णमिष्टं मेऽन्यासामपि च पूरयेः । रथस्तु क्व स यास्यामो येन देशान्तरे प्रिय ! ॥८६॥ भावि सर्वं शुभं निद्रा-

ऽधुना त्वेति शये क्षणम् । निगद्येति निद्रौ स राजपुत्री त्वचिन्तयत् ॥ ८७ ॥ अहो ! भयावहे कार्यसंघट्टेऽपि किमित्ययम् । निश्चिन्तो नीरथः शेते ? सोऽयं भवति वा न वा ॥ ८८ ॥ इति सा शङ्कया दीपं गुप्तं प्रादुरचीकरत् । उदाराकारमन्यं च तमालोक्य विसिष्मिये ॥ ८९ ॥ अहो ! रूपमहो ! कान्तिरहो ! सृष्टिर्नवा ह्यसौ । चिन्तितादधिको भाग्यात्तदयं नोऽभवत्पतिः ॥ ९० ॥ काचे जिघृक्षिते चिन्तामणिः पाणौ तदाऽगमत् । ध्यायन्तीत्यादि सा जज्ञे हर्षसंभ्रमसंकुला ॥ ९१ ॥ पश्यन्ती पुस्तिकां चाप्य रा तत्पादमवाचयत् । तस्यार्थं सम्यगालोच्य प्रामाणत्तमेव च ॥ ९२ ॥ सा मत्ययार्थं च सखीत्रयस्य द्वितीयपत्रेऽलिखदात्मचिह्नम् । किं कारणं दैवमलङ्घनीयमिति स्वपादं मुदिताञ्जनेन ॥ ९३ ॥ प्राग्वद्वस्त्राञ्चले तस्यावध्नान्निद्रायतो भृशम् । मत्यङ्गं विलुठद्दृष्टिरिष्टां सा पुस्तिकां च ताम् ॥ ९४ ॥ अवाहनेन नानेन साध्या देशान्तरे गतिः । ध्यात्वेत्यालम्ब्य पादार्थं यथागतमगादियम् ॥ ९५ ॥ द्वितीययामे सचिवाङ्गजाऽपि व्यूढाऽऽस्रदानेन तथैव तेन । प्राग्वद्धतत्पाणिगकङ्कणेन पादाक्षरैस्तैरुपलक्षितैश्च ॥ ९६ ॥ पाणीकृतां भूपसुतामनेन निबुध्य तुष्टा शयितेऽथ साऽस्मिन् । चिन्तां न तत्काऽपि सुधीर्दधीत पादं लिलेखेति तृतीयपत्रे ॥ ९७ ॥ युग्मम् ॥ तस्यां गतायां च तृतीययामे व्यूढा तथा श्रेष्ठिसुताऽपि तेन । यदस्मदीयं नहि तत्परेषां लिलेख पादं त्विति तुर्यपत्रे ॥ ९८ ॥ पुत्र्याः पुरोधसोऽप्येवं तुर्ये यामेऽभवत्कथा । प्राग्वृत्तं वीक्ष्य पत्रे साऽलिखत् श्लोकं तु पञ्चमे ॥ ९९ ॥ तथाहि—

न्यवसायं करोत्यन्यः फलमन्येन भुज्यते । पर्याप्तं व्यवसायेन प्रमाणं विधिरेव नः ॥ १०० ॥

लिखित्वेति गृहं साऽपि तथैवागात् सचेटिका । तथैवाऽशेत निश्चिन्तः पादार्थं सोऽपि भावयन् ॥ १०१ ॥ कनीनां रात्रिवृत्तं तच्चेट्योऽथ स्वागसो भिया । न्यवेदयंस्तदम्बानां स्वपतीनां च ता अपि ॥ १०२ ॥ दुष्प्रापः स गतः प्रातरिति भूपोऽरुणोदये । तं पुर्यां पिहितद्वारि नरैराप्तैरशोधयत् ॥ १०३ ॥ तत्र सुप्तं करावद्धचतुष्कङ्कणमद्भुतम् । तेऽथ प्रबोध्य तं तूर्यरावैर्भूपान्तिकेऽनयन्

॥ १०४ ॥ परिणीताश्चतस्रोऽमूः किं रे साहसिक ! त्वया ? । इति पृष्टो नृपेणेष समाहैतत्पुस्तिकाबलात् ॥ १०५ ॥ तां विभाव्य
तदुत्पत्तिमस्पाज्ञात्वा च भूपतिः । दध्यौ देवी तुतोषास्मै सत्येयं पुस्तिका पुनः ॥ १०६ ॥ तदयं देवतादत्तो मत्पुत्र्या वाञ्छितः
पतिः । रूपेणातिरमरो भूयात्कुलं त्वस्य न बुध्यते ॥ १०७ ॥ अथ मन्त्र्यादयोऽप्येत्य भूपमेवं व्यजिज्ञपन् । धूर्तः कश्चित्प्रभो !
रात्रौ परिणिन्येऽद्य नः कनीः ॥ १०८ ॥ दर्शयन् सिद्धदत्तं च राजा स्माह स एष भोः ! । तं वीक्ष्यात्यद्भुताकारं भूपवत्तेऽप्य-
चिन्तयन् ॥ १०९ ॥ अथो पुरन्दरः शान्तकोपो द्राक् सपरिच्छदः । अनुतप्तोऽभितः पुत्रं सर्वरात्रं गवेपयन् ॥ ११० ॥ तदुदन्तं
प्रगे लब्ध्वा नत्वा भूपं निरीक्ष्य तम् । पादानतं समालिङ्ग्योज्जिजीवेव महर्षुलः ॥ १११ ॥ युग्मम् ॥ तद्वृत्तान्तं निबुध्याथ नृपाद्याः
श्रेष्ठितोऽखिलम् । जहर्षुर्ज्ञातजामातृकुलमाहात्म्यगौरवाः ॥ ११२ ॥ राज्ञोचे तव पुत्रोऽमूः श्रेष्ठिन् ! कन्याः स्वयंवराः । प्रागपि
व्यूढवान् भाग्याकृष्टा वार्धिर्नदीरिव ॥ ११३ ॥ स्वहर्षपूर्तये कुर्मस्तथाऽप्युद्वाहविस्तरम् । नीत्वैतं स्वगृहे तस्य सामग्रीं तद्विधापय
॥११४॥ स्वाग्यादेशः प्रमाणं मे निगद्येति पुरन्दरः । पुत्रं समाह सहागो मे मुधानिर्भर्त्सितोऽसि यत् ॥ ११५ ॥ एहि भाग्यनिधे !
यावो गृहे स्वाम्बां प्रमोदय । सुतोऽवक् पूर्णसन्धोऽस्मि चतुष्कोट्यर्जनात्पितः ! ॥११६॥ तात ! कोपोऽपि पूज्यस्य तत्तेऽभून्मेऽद्भु-
तश्रिये । निर्माल्यमपि देवस्य शेषेत्याचं ह्यभीष्टकृत् ॥ ११७ ॥ रत्नानां विंशतिं यक्षदत्तां पित्रे स चार्पयत् । ज्ञात्वा तदुद्भवं श्रेष्ठी
भूपाद्याश्च चमत्कृताः ॥ ११८ ॥ श्रेष्ठ्यथो तं गजारूढं स्तूयमानं जगज्जनैः । विश्वनेत्रामृतं निन्ये स्वगृहे मङ्गलोत्सवैः ॥११९॥ तदु-
दन्तं निबुध्याथ कन्याः पूर्णमनोरथाः । बभुस्ता विस्मयानन्दोत्कण्ठमोहाननुत्तरान् ॥ १२० ॥ सुलग्नेऽथ तदुद्वाहं व्यधुस्ते प्रौढ-
विस्तरैः । पुरादीनां नृपः पञ्च सहस्रान् यौतके त्वदात् ॥ १२१ ॥ रामन्त्र्याद्याश्च हस्त्यश्वदासदासीरथादिकान् । शय्याद्युपस्करं
द्रव्यकोटीश्चास्मै ददुर्मुदा ॥ १२२ ॥ सुरूपयौवनस्नेहशालिनीभिः सदा सुखी । ताभी रेमे सपत्नीभिर्देवो दोगुन्दुगो यथा ॥१२३॥

सृजन् दानादिधर्माणि गुरुदेवार्चकः सुधीः । स प्रसिद्धिं प्रशंसां च सर्वत्र प्राप भाग्यभूः ॥ १२४ ॥ निश्चिन्तौ विहितौ तेन पितरौ शुद्धधर्मतः । प्रापतुः स्वःश्रियं कालाज्जातः पितृपदे च सः ॥ १२५ ॥ ग्रासैः राद्व्यवहारैश्च वणिक्पुत्रैर्विधापितैः । तस्यागुः संपदः स्फातिं वर्षाकाले लता इव ॥ १२६ ॥ पात्रं राजप्रसादस्य सर्वश्लाघ्यगुणो बभौ । श्राद्धधर्मक्रियोद्युक्तः सप्तक्षेत्र्यां वपन् धनम् ॥ १२७ ॥ मनोऽनुगासु पत्नीषु स्नेहसारासु सोऽद्भुतम् । पपौ भोगरसं तासु द्विरेफः पद्मिनीष्विव ॥ १२८ ॥ एवं त्रिवर्गसारं स भुञ्जानः केवलं सुखम् । समयं गमयामास पुण्यैरेकदशं बहुम् ॥ १२९ ॥ अजन्यन्त क्रमात्तेन तासु तेजोभृतः सुताः । स्वात्यब्देनेव सद्वृत्ता मुक्ताः सागरशुक्तिषु ॥ १३० ॥ कलासु कुशलाः श्राद्धधर्मानुष्ठानशालिनः । कृतपाणिग्रहाः पित्रोर्भक्ताः प्रौढाश्च तेऽभवन् ॥ १३१ ॥ अन्यदा समवासार्षीत्तत्र ज्ञाननिधिर्गुरुः । सिद्धदत्तः सभार्योऽस्य मुखाद्धर्मं मुदाऽशृणोत् ॥ १३२ ॥ ज्ञात्वा पूर्वभवं चास्मात्प्राव्रजद्विधिना सुधीः । सभार्योऽत्यन्तवैराग्यात्स्वपदे न्यस्य सोऽङ्गजान् ॥१३३॥ आराध्य च चिरं रत्नत्रयं प्राप सुरालयम् । क्रमात्स सेत्स्यति स्वल्पैर्भवैर्धर्मसुखोत्तरैः ॥१३४॥ कपिलस्तु विना धर्मं चिरं भ्रान्त्वा कुयोनिषु । दुःखान्यनेकधा भुक्त्वा सेत्स्यति प्राप्तधर्मतः ॥१३५॥ श्रुत्वेति देशविरतेर्गुरुशर्म सिद्धदत्तस्य तद्विहननात्कपिलस्य चान्यत् । शुद्धार्हताऽन्यतरधर्मविधौ प्रयत्नं कुर्यात यद्भवजयश्रियमाप्नुथ ज्ञाः ! ॥१३६॥ इति सिद्धदत्तकपिलाख्यानकमब्धीभमनुमिते १४८४ वर्षे । भव्यानुग्रहहेतोर्मुनिसुन्दरसूरिणा चक्रे ॥१३७॥

॥ इत्यदत्तादानपरिहारादिश्राद्धधर्माराधनविराधनयो सिद्धदत्तकपिलकथा ॥

तपावृहद्गच्छाधिराजश्रीदेवसुन्दरसूरिश्रीज्ञानसागरसूरिश्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनिसुन्दरसूरिपादैः

सवत् १४८४ वर्षे मार्गशीर्षमासे मेदपाटे देवकुलपाटके कृता ॥ छ ॥

# नियमचतुष्कपालने सुमुखनृपादिमित्रचतुष्ककथा।

जयश्रीः सर्वतो यस्य भाक्तिकं भजते नरम्। तं श्रीशान्तिजिनं नौमि सर्वोपप्लवशान्तये ॥ १ ॥ मनुजत्वे समेऽपि स्युर्विषमा यत्सुखश्रियः। कारणं धर्म एवात्र सुमुखादिनिदर्शनात् ॥ २ ॥ मूलं धर्मस्य देवोऽर्हन् शाश्वतानन्ददर्शनः। शुद्धाचारो गुरुः शीलं स्तुतिश्च परमेष्ठिनाम् ॥ ३ ॥ असहायोऽप्यदेशज्ञोऽप्येषामाराधनाद्ध्रुवी। अयत्नाल्लभतेऽभीष्टाः श्रियः सुमुखभूपवत् ॥४॥ तथाहि—

उत्तरापथदेशस्था भरतक्षेत्रमण्डना। पुरी तक्षशिला धत्ते स्वजातौ विजयश्रियम् ॥ ५ ॥ तत्र त्रिविक्रमो भूपस्त्रिविक्रमपराक्रमः। अक्रमाक्रान्तदिक्चक्रप्रतापोऽभूत् परंतपः ॥६॥ राज्यस्तस्याभवन् बह्वयः सुरूपा गुणखानयः। स्त्रैणचूडामणिस्तासु प्रधानं तु सुमङ्गला ॥ ७ ॥ सर्वाङ्गीणसुखाम्भोधिरयं गर्जेश्चिरं नृपः। बभ्रेऽनपत्यताचिन्तावडवानलमन्तरा ॥ ८ ॥ उपायान् ज्ञानिनोऽपृच्छदानर्चानेकदेवताः। मन्त्रांश्च सोऽजपच्चित्रान् लेभेऽपत्यं तथापि न ॥ ९ ॥ चिरं रेमे स योषिद्भिर्वल्लीभिरिव शारिभिः। दक्षोऽप्याप न चापत्यं यथान्धः कितवे जयम् ॥ १० ॥ पुत्रार्थमन्यदा चातिक्रान्तप्रायेऽपि यौवने। मेने स पुरयक्षस्य सुमुखस्योपयाचितम् ॥ ११ ॥ नहि भाग्याधिकं देवा दातुमीशाः कदाचन। भाग्याज्जाते फले त्वेभिर्दत्तं स्यादिति धीर्नृणाम् ॥ १२ ॥ अथ स्वप्नेऽन्यदाऽद्राक्षीदर्धरात्रे सुमङ्गला। विशन्तं स्वमुखे स्वर्णपूर्णकुम्भं पयोभृतम् ॥ १३ ॥ चतुर्भिः कमलैर्दिव्यस्रग्भिश्चतसृभिस्तथा। पूजितं सर्वतो लीनभृङ्गालिध्वनिबन्धुरम् ॥१४॥ युग्मम् ॥ सा तं पत्युः प्रबुद्धाऽऽख्यत्सोऽवग् नौ भविता सुतः। स्वराज्यसुखसंपूर्णोऽप्यागन्तुकरमाचितः ॥ १५ ॥ प्रपेदे साऽथ तन्मूर्ध्ना हर्षश्चासीद्द्वयोर्महान्। स्वप्नार्थं तद्विदोऽप्राक्षीत्प्रगेऽथाकार्य भूपतिः ॥ १६ ॥

तेऽप्युचुर्ज्ञानिनां गम्यः स्वप्नस्यार्थोऽस्य तत्त्वतः । निजप्रज्ञानुसारेण ब्रूमः किञ्चित्तु भूपते ! ॥१७॥ कुम्भः सुतः पयः सौख्यं राज्यानि कमलानि तु । स्रजो दिव्याः स्त्रियो भृङ्गाः पार्थिवार्थिगजादयः ॥ १८ ॥ चतूराज्यश्चतुष्पत्निपतिः सेव्यो नृपैः सुखी । चतुरङ्गमहासैन्यो दानी भावी सुतस्तव ॥१९॥ श्रुत्वेति मुदितो भूपस्तान् प्रपूज्य विसर्ज्य च । देव्या निवेद्य तत्सर्वमानन्दाद्वैतमातनोत् ॥२०॥ गर्भं सानन्दसंदर्भं सा धरेव दधौ निधिम् । तदादि स्पर्द्धयेवास्य राज्ञो वद्दधिरे श्रियः ॥ २१ ॥ समये दोहदस्तस्या जज्ञे राज्ञा समं पुरे । भ्राम्यन्ती सोत्सवं नागारूढार्थिभ्यो ददे धनम् ॥ २२ ॥ पत्या सोऽपूरि दुष्पूरं किं हि भाग्यवतां नृणाम् ? । सुलग्नेऽसूत पुत्रं च सा विश्वनयनोत्सवम् ॥ २३ ॥ वर्धापनस्य दात्र्यै च दास्यै दानमदान्नृपः । येनैषीद् राजदासीत्वं सा प्रेत्यापि मुदा तदा ॥२४॥ विश्वाह्लादैक्यकृच्चक्रे मुदा राज्ञोत्सवस्तदा । यस्मिन्नृलोक एवेष्टो देवासुरनृणामभूत् ॥२५॥ यत्तेण सुमुखेनैष दत्त एवंधिया पिता । आख्यां सुमुखदत्तेति तस्य प्रौढोत्सवं ददौ ॥२६॥ क्रमात् सुमुख इत्येव प्रसिद्धो वद्दधे च सः। समये च कलाचार्याज्जग्राह सकलाः कलाः ॥ २७ ॥ स्वभावसुभगेऽप्याप्तयौवनाद्वद्दधेऽधिकम् । रूपशोभा च पुष्पस्य वसन्तादिव कानने ॥ २८ ॥ इतश्च नन्दिनो राज्ञः श्रीविशालपुरेशितुः । कन्या कीर्तिमतीत्यासीद्देवकन्येव भूगता ॥२९॥ रूपं कला गुणास्तस्या वर्धन्ते स्म यथा यथा । सस्पर्धं वद्दधे राज्ञो वरचिन्ता तथा तथा ॥ ३० ॥ बन्दिभ्यः सुमुखस्याथ श्रुत्वा लोकोत्तरान् गुणान्। प्रत्यज्ञास्त स एवास्मिन् भवे भर्ता ममेति सा ॥ ३१ ॥ ज्ञात्वा स्वरूपं तद् भूपस्तस्य तां सह मन्त्रिभिः । विवाहप्रौढसामग्र्या प्रजिघाय स्वयंवराम् ॥३२॥ आगच्छन्तीं च तां श्रुत्वा रूपान्तरमिव श्रियः । प्रमुदाते पितापुत्रौ तद्भाग्यं चास्तवीज्जनः ॥ ३३ ॥ साऽपि तक्षशिलामेत्य सम्मुखागतमन्त्रिभिः । दत्तावासे नृपादेशादुत्ततार सहानुगा ॥ ३४ ॥ अथो नन्दिनृपामात्यैर्विज्ञप्तः सोपदैर्नृपः। सत्कृत्य तान् मुदा लग्नं जग्राह गणकार्पितम्

॥ ३५ ॥ प्राप्ते तस्मिन् स देवानामपि विस्मयकारकम् । चक्रे तया समं सूनोः पाणिग्रहमहोत्सवम् ॥ ३६ ॥ वरायाथ गजाश्वादि दत्त्वा ते नन्दिमन्त्रिणः । वध्वै हितोपदेशं च स्वपुरेऽगुर्नृपार्चिताः ॥ ३७ ॥ स्नेहयौवनशालिन्या कुमारोऽथ तया समम् । पितृवितीर्णावासे विललास सुखैक्यवित् ॥ ३८ ॥ अथ सेनाधिपामात्यपुरश्रेष्ठिसुता इह । समानवयसो मित्राण्यस्य चाबाल्यतोऽभवन ॥ ३९ ॥ कृतपाणिग्रहैर्मित्रैः क्रीडोद्यानादिषु त्रिभिः । कियन्तं समयं निन्ये स्निग्धैः क्रीडन् सहैव सः ॥ ४० ॥ अन्यदा चरटं भीमं जेतुं यान्तं नराधिपम् । विनयेन निवार्यैष सहानीकोऽगमत् स्वयम् ॥ ४१ ॥ जित्वा तं द्वन्द्वयुद्धेन बद्ध्वा पित्रे स चार्पयत् । भूपस्तं सेवकीचक्रे विस्मितः सूनुविक्रमात् ॥ ४२ ॥ राज्यार्हं बालमप्येतं ज्ञात्वाऽथाबालविक्रमम् । प्रबुद्धः पलितं दृष्ट्वा भूपो राज्ये न्यवीविशत् ॥ ४३ ॥ दत्ताजीवाभयः सोऽर्चां कृत्वाऽर्हो जिनसङ्घयोः । प्राव्रजत् सुगुरूपान्ते समयज्ञा हि पण्डिताः ॥ ४४ ॥ सुमुखोऽथ नवो राजा जित्वा शत्रून् पराक्रमैः । महादानी जगच्चक्रे स्वप्रतापयशोमयम् ॥ ४५ ॥ पूर्वान् सेनाधिपादींश्च निश्चिन्तीकृत्य सोऽन्यदा । नवांस्त्रीनपि मित्राणि तत्पदेषु न्यवीविशत् ॥ ४६ ॥ तेषु विश्वासपात्रेषु स्नेहसारेषु भूपतिः । न्यस्य राज्यभरं रेमे निश्चिन्तो विषयेष्वलम् ॥ ४७ ॥ सौभाग्यादिगुणोर्व्यां स कीर्तिमत्यां मनोहृति । स्नेहमूढोऽधिकं रेमे प्रायोऽन्तःपुरगः सदा ॥ ४८ ॥ सेनेशसचिवश्रेष्ठिसुताः पितृपदस्थिताः । राज्यं तु सुहृदः सर्वधुरीणा निरवाहयन् ॥ ४९ ॥ बलेनास्माकमेवायं भुङ्क्ते राज्यं नृपः सुखी । चक्रुः कदाचनालापमेवं ते मिलिताः क्वचित् ॥ ५० ॥ श्रुत्वा दासी तदाचख्यौ राज्याः साऽपि महीपतेः । सोऽपि दध्याविदं सत्यं न वेति क्वापि निर्णये ? ॥५१॥ ममास्ति राज्यभाग्यं चेत्तत्किमेषां मुधोक्तिभिः ? । तच्चेन्नान्यबलाप्तेन राज्येनानेन किं मम ? ॥ ५२ ॥ परीक्षिष्ये स्वपुण्यं तदेभिः सह विदेशगः । अस्ति तच्चेत्प्रदर्श्यैषां विधास्येऽहं ततोऽखिलम् ॥ ५३ ॥ इति निश्चित्य

भूपोऽथ कस्यचिद्विजयच्छलात् । सन्धौ गत्वा स्वदेशस्यामूढलक्षो जगाद तान् ॥ ५४ ॥ चत्वारो दोर्धना यामः सकृद्देशान्तरे वयम् । स्वभुजोपार्जितां लक्ष्मीं व्यक्तीकृत्य च भुङ्क्ष्महे ॥ ५५ ॥ यदुक्तम्—

“ दीसइ विविहं चरियं जाणिज्जइ सुयणदुज्जणविसेसो । नियपुन्नपमाणं गुणवियड्ढिमा य तेण निउणा नियंति महिं ॥ १ ॥ ”

स्वाभिप्राये नृपेणैवमुक्ते सेनाधिपादयः । जगुस्त्रिष्वपि कालेषु नाथ ! समस्त्वन्मनोऽनुगाः ॥ ५६ ॥ राज्यं प्राक् सचिवादीनां रक्षणार्थं समर्प्यते । भूपाद्या निशि निर्जग्मुश्छन्नं देशान्तरे ततः ॥ ५७ ॥ यामद्वयेन ते जग्मुर्भुजमात्रपरिग्रहाः । परदेशे पुरं किञ्चिदुज्जगाराथ तान्नृपः ॥५८॥ स्वशक्त्यैवात्र नः कोऽत्र भोजनादि करिष्यति । ते यमादिक्ष्यसीत्यूचुः श्रेष्ठिपुत्रं स चादिशत् ॥५९॥ वृक्षस्याधोऽथ तान् मुक्त्वा श्रेष्ठिभूः प्राविशत् पुरे । हट्टं च निःसहायस्य वणिजोऽध्यास्त कस्यचित् ॥ ६० ॥ सुते ग्रामं गते तस्मिन् दिने कस्मिंश्चिदुत्सवे । बहुभ्यो भूरिभाण्डानां ग्राहकेभ्यः सतामपि ॥६१॥ दानादावपटोस्तस्य ज्यायसो वणिजस्तदा । पुटीबन्धादिना दक्षः साहाय्यं सोऽकरोद् भृशम् ॥ ६२ ॥ युग्मम् ॥ तत्साहाय्याद्वणिग् वीक्ष्य जातं लाभं बहुं मुदा । हट्टकाले व्यतिक्रान्ते जगौ कोऽस्यागमः कुतः ? ॥६३॥ सोऽप्यवक् श्रेष्ठिभूर्देशान्तरादागां वणिग् जगौ । एहि यावो गृहं सोऽवग् बहिर्मे सुहृदस्त्रयः ॥६४॥ तानप्याकारयेत्युक्ते वणिजा स तथाऽकरोत् । रूपकैः पञ्चभिः सार्ध्यं तेभ्यः सोऽदाच्च भोजनम् ॥ ६५ ॥ स्वशक्त्या मुदिते श्रेष्ठिसुते ते चाग्रतोऽचलन् । द्वितीयेऽह्नि तथैवाथादिक्षत्सेनाधिपं नृपः ॥६६॥ तथैव स पुरे गत्वा जित्वा द्यूतेन कुत्रचित् । पञ्चरूपकशत्या तान् वणिगोकस्यबूभुजत् ॥ ६७ ॥ सेनाधीशं त्रयोऽशंसंश्चेलुः सर्वेऽपि चाग्रतः । राजाऽऽदिक्षत्तृतीयेऽह्नि कर्तुं भोज्यादि मन्त्रिणम् ॥ ६८ ॥ सोऽप्यगात्कृतसङ्केतो भूत्वाऽग्रेऽथ कचित् पुरे । पटहं वाद्यमानं च वीक्ष्य पप्रच्छ वादकम् ॥ ६९ ॥ तत्स्वरूपं स चावादी-

देकशः श्रुतधारिणी । अत्र कापालिकी काचित् पुरो राज्ञोऽन्यदाऽवदत् ॥ ७० ॥ श्रावयत्यश्रुतं यो मां तस्मै कच्चोलकं ददे । रूप-
काणां सहस्रैर्यल्लभ्यते पञ्चभिर्ध्रुवम् ॥ ७१ ॥ अश्रावयंस्ततो विज्ञास्तां गाथादि नवं नवम् । प्रज्ञया साऽवधार्याख्यदायातीदं पुरा-
८ ॥ ऽपि मे ॥ ७२ ॥ ततः स्वख्यातिहेतोः सा पटहं वादयत्यमुम् । कश्चिज्जयति मां नेति गर्वाद्विज्ञाप्य भूपतिम् ॥ ७३ ॥ निशम्येति
निवार्यैतं मन्त्री राज्ञः पुरोऽगमत् । तामाकार्य सदस्यूचे गाथामिति महामतिः ॥ ७४ ॥

तुज्झ पिया मह पिउणो धारेइ अणूणगं सयसहस्सं । जइ सुअपुव्वं दिज्जउ अह न सुयं खोरयं देसु ॥ ७५ ॥

जिताऽथ लज्जिताऽस्मै सा दत्त्वा कच्चोलकं द्रुतम् । हस्यमानाऽनशल्लोकैर्मन्त्री राज्ञा च सत्कृतः ॥ ७६ ॥ भुक्त्यै निमन्त्रितः
सोऽवक् सुहृदः सन्ति मे वहिः । आकार्यैतान् नृपः सर्वान् सगौरवमबूभुजत् ॥ ७७ ॥ भूपमापृच्छ्य ते चेलुश्चतुर्थेऽथ दिनेऽग्रतः ।
नृपोऽवक् सुमुखश्चाद्य करिष्ये भोजनादि नः ॥७८॥ ओमित्युक्तेऽथ तैरग्रे भूत्वा चन्द्रपुरेऽगमत् । श्रान्तोऽस्वाप्सीदशोकद्रुच्छायेऽथो
भाग्यदत्तदृग् ॥ ७९ ॥ अथ शाकुनिकः कश्चित्तत्र सामुद्रिकान्वितः । नराश्च मन्त्रिणा प्रापुस्तांश्च शाकुनिकोऽब्रवीत् ॥ ८० ॥ भो
भोः ! पश्यत सुप्तोऽयं पुमान् योऽस्यानुभावतः । विशन्त्यशोकशाखास्थगृध्रास्ये कीटकाः स्वयम् ॥ ८१ ॥ तदस्य प्राप्तराज्यस्य
कीटवद्वैरिभूभुजः । राज्यप्राणान् प्रदास्यन्ति निपतन्तो रणानने ॥ ८२ ॥ लक्षणानि नृपस्याङ्गे वीक्ष्य सामुद्रिकोऽप्यवक् । यद्यस्य
न भवेद्राज्यं तदा शास्त्रं स्पृशामि न ॥ ८३ ॥ चिह्नं चैतदशोकस्य सुप्तेऽस्मिन् पुरुषोत्तमे । परावर्तिष्यते छाया सर्वेणापि दिनेन न
॥ ८४ ॥ अङ्कयित्वाऽथ कङ्केल्लेश्छायां निश्चित्य च स्थिराम् । तं वृत्तान्तं नरा गत्वा मन्त्रिणां द्राग् न्यवेदयन ॥ ८५ ॥ राजच्छ-
त्रादिसामग्रीं तेऽप्यादाय मुदाकुलाः । तत्रागत्य ध्वनत्तूर्यैर्गीतैश्च तमबूबुधन् ॥ ८६ ॥ अवोचंस्तेऽथ राज्यं तेऽस्माभिर्न्यासपदे धृतम् ।

तद्राजन् ! स्वीकुरुष्वाद्य देवादिष्टोऽसि नः प्रभुः ॥ ८७ ॥ प्रतिवक्ति नृपः किञ्चित्स यावत्संभ्रमाकुलः । तावदारोपितो दत्तहस्तालम्बैर्गजेऽथ तैः ॥८८॥ दृष्ट्वोपलक्ष्य तं हृष्टैर्जुघुषे वन्दिभिस्तदा । जीयात्सुमुखभूपोऽयं केनचिद्धेतुनैककः ॥ ८९ ॥ तद्विशेषमुदा छत्रचामरातोद्यडम्बरैः । तं ससैन्यं नृपाचारैर्मन्त्रिणोऽवीविशन् पुरे ॥ ९० ॥ प्राप्तो नृपसभे स्फूर्जच्चित्रमङ्गलपूर्वकम् । रैसिंहासनमध्यास्य तैर्द्राग् राज्येऽभ्यषेचि सः ॥ ९१ ॥ सोऽपि सर्वनृपाचारविदुरो भाग्यधीनिधिः । उचितालापसम्मानैः सार्वलौक्यमपिप्रिणत् ॥९२॥ वर्धापनोपदाद्येषु जातेष्ववसरे नृपः । बुभुत्सुः सुहृदः स्मृत्वा तलारक्षमथादिशत् ॥९३॥ आगच्छतः प्रतीन्यांस्त्रीन् पथिकान् साकृतीन्नवान् । मानात् प्रसह्य वाऽऽकार्य द्रागानय पुरो मम ॥ ९४ ॥ नृपादेशं प्रपद्याशु गत्वा सोऽथ भटैर्वृतः । क्रोशान्तेऽध्वनि तान् वीक्ष्याजूहवद् भूधवाज्ञया ॥९५॥ दध्युस्ते चकिताश्चैतद् राज्यं नः शत्रुभूभुजः । उपलक्ष्य ततोऽग्राहि वैरिभिः सुमुखो नृपः ॥९६॥ ज्ञापिताश्च वयं तेन तस्माद् गृह्यामहेऽरिभिः । ततः पलायिपातां द्वौ सेनेशस्तु युधेऽभ्यगात् ॥९७॥ जित्वा बद्ध्वा समानीय तलारक्षो नृपाग्रतः । व्यमुञ्चत्कान्दिशीकांस्तान् भूपः के यूयमित्यवक् ॥ ९८ ॥ नृपोऽयं सुमुखाकार इति ते शङ्किता मनाक् । अवोचन् सेवकास्ते स्मः शरणं नोऽसि मुञ्च तत् ॥९९॥ भाग्यं परीक्षितं स्वं स्वं सुहृदः ! सुमुखोऽस्म्यहम् । साहाय्यं वो विनाऽप्यापं राज्यमेतदयत्नतः ॥१००॥ भोजनाद्याप्तिमात्रात्तद् भाग्यान्मा भूत गर्विताः । इत्युक्त्वा तान् विमोच्यैषोऽप्यालिलिङ्ग पदानतान् ॥१०१॥ युग्मम् ॥ नाथैषाऽभूत् कथं ते श्रीरित्युक्ते तैर्नृपेरितः । अङ्गरक्षोऽवदत् सर्वं विस्मितास्तेऽस्तुवन्नृपम् ॥ १०२ ॥ स्नात्वाऽभ्यर्च्य जिनं भूपोचितं भुक्त्वाऽथ तैः सह । यावत्पल्यङ्कमध्यास्य विनोदांस्तनुते नृपः ॥१०३॥ तावन्मन्त्रीश्वरो राज्ञी दिव्यरूपविभूषणा । कन्या चैका समागत्य कृतौचित्या उपाविशन् ॥ १०४ ॥ मन्त्री स्माहोपयच्छस्व राजन् ! दिव्यां कनीमिमाम् । अयं वामुचितो योगो

रोहिणीचन्द्रयोरिव ॥ १०५ ॥ नृपोऽप्याख्यत्किमज्ञाते मयि राज्यं न्ययोजयः। कुलं वा न नृपे मृग्यं वीरभोग्या यतो धरा॥१०६॥ परमज्ञातवंशादेर्दत्से कन्यामिमां कथम् ?। का चैषा कन्यका का च योषेयं नेत्रतोषिणी ? ॥ १०७ ॥ कश्चात्राभून्नृपः पूर्वं ? कथं राज्यं च सोऽत्यजत् ?। मन्त्र्यथोवाच भूपेदं शृणु विस्तरतो ब्रुवे ॥ १०८ ॥ तथाहि—

पुरेऽत्र प्राग् महेन्द्रश्रीर्नृपोऽभून्नरवाहनः। तस्य राज्ञीषु बह्वीषु श्रीकान्ताऽधात् प्रधानताम् ॥ १०९ ॥ सुतः सामन्तराजस्य चन्द्रसेनोऽस्य भूभुजः। आबाल्यादभवन्मित्रं सवया देहमात्रभित् ॥ ११० ॥ धर्मघोषगुरोः पार्श्वेऽन्यदोद्यानमुपेयुषः। सम्यक्त्वाद्यं यथाशक्ति धर्मं जगृहतुश्च तौ ॥ १११ ॥ तयोर्बाल्ये युवत्वे च राज्येऽपि सह खेलतोः। दस्रयोरिव कालोऽगात् प्रीतिसौख्यमयः कियान् ॥११२॥ सर्वत्रास्खलितो नित्यं भूपस्यान्तःपुरेऽन्यदा। श्रीकान्तां चन्द्रसेनोऽथ वीक्ष्य मोहवशोऽभवत् ॥११३॥ नारीशल्ये तदाऽस्य हृदि क्षिप्ते स्मरारिणा। भृशतापभृतो जज्ञे रतिर्न विषये क्वचित् ॥ ११४ ॥ भोजनादिष्वरुच्याऽस्य तच्चिन्ताराजयक्ष्मणा। कृशिमानं वपुर्निन्ये विच्छायस्य दिने दिने ॥ ११५ ॥ अन्यदा गाढनिर्बन्धात्पृष्टो भूपेन कारणम्। किञ्चिद्गोप्यं न मित्रस्यास्येति सोऽवग् यथातथम् ॥ ११६ ॥ यदुक्तम्—

"ददाति प्रतिगृह्णाति गोप्यमाख्याति पृच्छति। भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥ १ ॥"

भूपोऽप्यूचेऽल्पमेवेदं सर्वं साधु भविष्यति। अबुद्ध्वा च तदाकूतं चन्द्रसेनो ययौ गृहम्॥११७॥ दध्यौ राजाऽथ राज्येन प्राणैः पत्न्याऽपि वा मया। मित्रस्यास्येप्सितं कार्यं सर्वेभ्योऽपि प्रियो ह्ययम् ॥ ११८ ॥ प्रदोषेऽथ नृपः प्रोचे श्रीकान्तां वच्मि किञ्चन। चेत्करोष्यविचार्यैव मदुक्तं साध्वसाधु वा ॥ ११९ ॥ जगौ पतिव्रता साऽपि त्वदाज्ञाधारणो मम। अपश्यः काऽप्यसंवादं यदीशैवं

विभापसे ? ॥ १२० ॥ राजोचे तर्हि मे चन्द्रसेनस्य सुहृदोऽन्तिके । द्राग् व्रजोपचरैतं च पत्नीभावेन मामित्र ॥ १२१ ॥ पत्यादेशं सृजन्त्यास्ते न तु दोषोऽस्ति कश्चन । प्रमाणं मे प्रियादेश इत्युक्त्वा सा तथाऽकरोत् ॥ १२२ ॥ स्ववासभवने चन्द्रसेनस्तामथ तल्पगः । भूषणोद्द्योततोऽद्राक्षीद्दिव्यरूपामुपागताम् ॥१२३॥ काऽसीत्यूचे स संभ्रान्तः पत्यादेशादि साऽब्रवीत् । तज् ज्ञात्वा सोऽपि मेधावी दध्यौ सव्रीडविस्मयः ॥ १२४ ॥ निर्गुणोऽपि मयि स्नेहो भूपतेः कोऽप्यहो ! नवः । शास्त्रलोकैर्विरुद्धं यत्तदप्येप यतो व्यधात् ॥ १२५ ॥ बहवोऽपि ददुः प्राणान् स्नेहान्मानादितोऽपि वा । सतीं चेतोऽनुगां कान्तां न तु कस्यापि कोऽप्यदात् ॥ १२६ ॥ रामो रामायणं चक्रे बन्धून् पार्थोऽवधीत् स्त्रियै । सुग्रीवोऽघातयद्वालिमेप तां मत्कृतेऽत्यजत् ॥ १२७ ॥ लोकरूढ्याऽयं श्लोकः ॥ उत्तमोऽयं प्रपन्नां मे प्रीतिमित्यपि रक्षति । अधमः कामयेऽप्यम्बानिभां राजप्रियां त्वहम् ॥ १२८ ॥ समेऽपि तदहो ! नृत्वे कियदन्तरमावयोः ? । स्मरभूतवशः क्लीवः किमकृत्यमचिन्तयम् ? ॥ १२९ ॥ तदिदं जीवितं धिग् मे नरजातेः कलङ्कदम् । दुर्गतौ पतितो लप्स्ये दुःखान्यस्माच्च पातकात् ॥ १३० ॥ आत्मानं शोधयिष्यामि छित्वा शीर्षं ततोऽसिना । दुश्चिन्तितानुतापाग्निदग्धरागविषद्रुमः ॥ १३१ ॥ ध्यात्वेति खड्गमाकृष्य यावत् कण्ठे स मुञ्चति । धृतः श्रीकान्तया तावत्पाणौ संभ्रान्तया द्रुतम् ॥ २३२ ॥ सोऽप्यूचे शोधयामि स्वं राजपत्न्याः परस्त्रियाः । कामनापापपङ्काक्तं स्वघातात्किं निषेधसि ? ॥ १३३ ॥ साऽवोचन्नात्मघातेन याति पापं शरीरवत् । तपः कुरुष्व तच्छुद्ध्यै जीवन् भद्राण्यवाप्नुहि ॥ १३४ ॥ सोऽपि स्माहेति कर्ताऽस्मि मोहो मेऽगात् पतिं व्रज । राजपत्नीति पूज्याऽसि स्वाम्बातुल्या प्रजासु हि ॥ १३५ ॥ साऽथ तत्सत्त्वतुष्टैतद्गत्वा राज्ञो न्यवेदयत् । सोऽपि तां विस्मितः स्निह्यन् प्रियां भोगैरपिप्रिणत् ॥ १३६ ॥ अन्योऽन्यं सत्त्वसंतुष्टौ प्रशंसन्तौ सविस्मयौ । निशां सहर्षनिर्वेदौ सुहृदौ तौ व्यतीयतुः ॥

१३७ ॥ प्रातर्भवविरक्तोऽथ चन्द्रसेनो नृपान्तिके । गत्वोचे प्रव्रजिष्यामि त्वं हनिष्यामि वा ध्रुवम् ॥१३८॥ मित्रराजप्रियाद्रोहपापपङ्कौघभारिणः । शुद्धिर्नेतरथा मेऽनुमन्यस्वाऽन्यतरत्ततः ॥ १३९ ॥ राजोचे कावयोर्भेदः ? प्राणेभ्योऽपि प्रियोऽसि हि । कलङ्कयसि किं मित्र ! मैत्रीं भेदं वदन् स्त्रियाम् ? ॥ १४० ॥ प्रायश्चित्तेन चेत्तोपश्चर चान्द्रायणादि तत् । मा वादीः श्रुतिशून्याभं वियोगं ते कथं क्षमे? ॥ १४१ ॥ सोऽप्यवग् यत एवैवं मयि स्निह्यसि बान्धव ! । अत एवाकृतज्ञत्वानुतापो मे भृपायते ॥ १४२ ॥ न रतिं तल्लभे गेहे बिभेमि स्मररक्षसः । हनिष्यामि तदात्मानं कालक्षेपं च न क्षमे ॥ १४३ ॥ नृपोऽकामोपि तस्यात्महत्याभीत्याऽवदत्ततः । इति चेन्निश्चयो मित्र ! प्रव्रजस्वेच्छया तदा ॥१४४॥ प्रव्रज्या यदिहामुत्रापीष्टश्रेयःप्रदा भवेत् । जीवामि चाहमप्येवं जीवतस्ते दिदृक्षया ॥ १४५ ॥ हृष्टस्तत्र वने धर्मघोषगुर्वन्तिकेऽगमत् । श्रुत्वा धर्मं फलं चास्य संविग्नो व्रतमाददे ॥ १४६ ॥ अधीतश्रुतसारोऽथ तीव्रं तप्त्वा चिरं तपः । माहेन्द्रे त्रिदशो जज्ञे शक्रसामानिको महान् ॥ १४७ ॥ राज्ञो मित्रवियोगार्तिश्चिरात् श्रीकान्तया हृता । संसारसुखसर्वस्वहेतुसद्गुणरूपया ॥ १४८ ॥ यदुक्तम्—

" संसारतापखिन्नानां तिस्रो विश्रामभूमयः । अपत्यं च कलत्रं च सर्वज्ञस्यागमोऽथवा ॥ १ ॥ "

कालादजीजनत्तस्यां मणीवत्यामिवाम्बुदः । कन्यां भोगवतीं राजा मणीमिव विभास्वराम् ॥ १४९ ॥ चतुःषष्टिकलादक्षा क्रमात्सा प्राप्तयौवना । सर्वस्त्रैणगुणा जज्ञे सौभाग्यश्रीरिवाङ्गिनी ॥ १५० ॥ नापत्यमधिकं राज्ञश्चिरेणाप्यस्य चाभवत् । अन्यदा निशि सुप्तं तं दिव्यः कोऽपि जगौ पुमान् ॥१५१॥ प्रबुध्यस्व प्रबुध्यस्व द्विधाऽपि द्राग् नराधिप ! । चौरा ज्वलति गेहे ते सर्वस्वं लुण्टयन्त्यमी ॥ १५२ ॥ प्रबुद्धः सहसोत्थायैक्षिष्टाऽथ क्षुभितोऽभितः । न त्वद्रार्त्तीन्नृपो गेहं ज्वलच्चौरांश्च न कचित् ॥ १५३ ॥ देहा-

लङ्कारतेजोभिर्द्योतयन्तं दिशो नृपः। दिव्यं तं तु नरं वीक्ष्य नत्वाऽवादीत् कृताञ्जलिः ॥ १५४ ॥ कस्त्वं द्वेधा प्रबोधः कः को वह्निः के च दस्यवः ?। पुरायैर्दृगुत्सवीभूतो वदेदं वेद्मि न प्रभो !। ॥ १५५ ॥ सोऽथावादीत्सुरोऽस्म्येष प्रबोधो द्रव्यभावभित्। निद्रा-मोहोज्झनाद् द्वेधाऽत्रामुत्र च हितावहः ॥ १५६ ॥ जीवो गेही वपुर्गेहं जरा वह्निर्देहत्यदः। कषायविषयाश्चौरा मुष्णान्ति सुकृतं धनम् ॥ १५७ ॥ नार्द्यसे जरसा यावत्तावन्मोहं विमुच्य तत्। कषायविषयत्यागात्स्वहितं सुकृतं चर ॥१५८॥ स्वार्थैकनिष्ठेषु विभिन्नवृत्ति-ष्वल्पाहसंयोगिषु नश्वरेषु। त्राणानलंभूष्णुषु दुःखदेषु क एव मोहः स्वजनेषु राजन्! ॥१५९॥ यावन्तो हि प्रजायन्ते पुंसः पत्नी-सुतादयः। तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥ १६० ॥ धनेन रक्ष्यते विद्वान्न धनी न च तेन तत्। तथाऽपि तस्मिन् यन्मोहस्तन्मूर्खिमविजृम्भितम् ॥१६१॥ असारं नृभवे देहं प्राप्य पापं करोति कः ?। एरगडतरुमाश्रित्य कुञ्जरं न विरोधयेत् ॥१६२॥ महता पुरायपरायेन क्रीतेयं कायनौस्त्वया। त्वरस्व तद्भवाम्भोधिं तर यावन्न भिद्यते ॥ १६३ ॥ जरसा ग्रस्तदेहेन धर्मभारो हि दुर्वहः। तदनागम एवेति कुर्यादात्महितं सुधीः ॥१६४॥ रदततिः पतिता वलिता गता वलिभिरावलितं पलितं वपुः। विषयकर्दमदु-र्दमवाञ्छया तदपि नात्महितं विहितं जडैः ॥ १६५ ॥ कषायलूकया तप्तो विषयैर्नैव तृप्यति। चिरं भुक्तैरिवाम्भोभिः सतृष्णो याति दुर्गतिम् ॥ १६६ ॥ पापैरारम्भजैर्मृत्यौ दुर्गतौ ते पतिष्यतः। नालं त्राणाय पादातं स्त्रैणमाश्वं च हास्तिकम् ॥ १६७ ॥ गलत्यविश्रान्तमिदं नृपायुः पुनर्दुरापो नृभवादियोगः। यतस्व धर्मे तदनुत्तरे द्रागनुत्तरं शर्म यतो लभेथाः ॥ १६८ ॥ सुरोत्तमेनेति हितार्थिनोक्तं श्रुत्वोपदेशं नृपतिर्जगाद। विभो! प्रबुद्धोऽस्मि निरीक्ष्यमाणो कथं त्वयि स्निह्यति मे मनस्तु ? ॥१६९॥ जगौ स मित्रं तव चन्द्रसेनस्तपःप्रभावात्त्रिदशोऽस्मि जातः। तत्ते प्रबोधाद्विदधामि मैत्रीं पूर्वोपकारोपचितां कृतार्थाम् ॥ १७० ॥ भूपः सहर्षाश्रु-

रुवाच वन्धोऽभूवं कृतार्थस्त्वदनुग्रहेण । स्नेहः किमत्रैव भवेऽयमासीद् भवान्तरे वाऽपि ? वद प्रसीद ॥ १७१ ॥ देवोऽत्रोचद्भवाभ्यासाज्जज्ञे स्नेहोऽयमावयोः । विशेषप्रतिबोधाय तं च मे गदतः शृणु ॥ १७२ ॥ ग्रामे सिद्धवटे स्निग्धावभूतां बान्धवौ द्विजौ । गोभूतिवसुभूत्याह्वौ ज्योतिषादिष्वधीतिनौ ॥ १७३ ॥ श्राद्धेन हरिमित्रेण सुहृदा बोधितावपि । जैनं जगृहतुर्धर्मं न तौ मिथ्यात्ववासितौ ॥ १७४ ॥ मिश्रभावात्मकौ तस्मिन् यत्र तत्र यदा तदा । मित्रदाक्षिण्यतः किन्तु तमेतौ प्रशशंसतुः ॥ १७५ ॥ सुहृच्छ्राद्धेन संवासात्तदनुष्ठानवेदिनौ । हास्यात् पञ्चनमस्काराद्यसकृत्पेठतुश्च तौ ॥ १७६ ॥ न तु यागादिकृत्यानि क्रूरारम्भाणि तेनतुः । स्नानादिक्रियया वैम्या गमयामासतुर्जनुः ॥ १७७ ॥ मृत्वा तत्रैव चाभूतां कौटुम्बिकगृहे वृषौ । ऊहतुर्धूर्वहौ चाथ तावनांसि हलानि वा ॥ १७८ ॥ अन्यदा तीर्थयात्रायै क्रीत्वाऽनसि नियोज्य तौ । हरिमित्रोऽचलत् श्राद्धैः सह शत्रुञ्जयं प्रति ॥ १७९ ॥ यानारोहावरोहादौ तच्छ्राद्धोच्चारितं मुहुः । तौ नमो अरिहंताणमिति शुश्रुवतुर्वृषौ ॥ १८० ॥ तौ च श्रुतचराण्येतान्यक्षराणीति चिन्तया । स्मरतः स्माऽन्यदा जातेः श्राद्धमैत्रीफलं ह्यदः ॥ १८१ ॥ स्वतादृक्पशुताखिन्नौ निन्दन्तौ प्राग्भवक्रियाम् । सततोदश्रुनेत्रौ तावाहाराद्यपि नैच्छताम् ॥ १८२ ॥ दृष्ट्वा तादृक्स्वरूपौ तौ श्राद्धो रोगादिशङ्कया । कृपयोपचचारार्हं न्यास्यान्यौ तत्पदे वृषौ ॥१८३॥ तथाऽपि मुमुचाते तौ न तथात्वमितश्च सः । तृतीयेऽह्नि युगादीशं श्राद्धः शत्रुञ्जयेऽनमत् ॥ १८४ ॥ चारणश्रमणं तत्र जिनं नन्तुमुपागतम् । नत्वाऽपृच्छत्तयोस्तादृक्स्वरूपे कारणं च सः ॥ १८५ ॥ अजिहेतत् मुनिः पूर्वभवस्मृत्यादि तत्तयोः । सोऽथानीय मुनेः पार्श्वे तौ सद्धर्ममबूबुधत् ॥ १८६ ॥ मुनिराख्यत् फलं दृष्टं मिथ्यात्वस्येति तद्वृषौ । श्राद्धधर्मं प्रपद्येथां स्वर्गादिश्रीर्यतो भवेत् ॥ १८७ ॥ मुनेरित्यादिभिर्वाक्यैः प्रबुद्धौ तौ सुदर्शनम् । साणुव्रतं प्रपेदाते प्राप्तं प्राग् बहुमानतः ॥ १८८ ॥ क्षमयामासतुर्मित्रं नत्वा

तौ साश्रुलोचनौ। उपदिष्टं हितं तेनाकृत्वा गाढानुतापिनौ ॥ १८९ ॥ हरिमित्रोऽपि तद्धर्मप्रपत्त्या मुदितोऽब्रवीत्। श्लाघ्यं वां पशुजन्मापि सुहृदौ! बोधिलाभतः ॥ १९० ॥ तन्मा विषदतं धर्मनिर्वाहो युवयोर्मया। करिष्यते सदा बन्ध्वोरिव साधर्मिकत्वतः ॥ १९१ ॥ हृष्टौ ततो युगादीशं नत्वाऽथाष्टमपारणे। आहारं बुभुजाते तौ प्रासुकं श्राद्धढौकितम् ॥ १९२ ॥ कृत्वाऽथ श्रीयुगादीशपूजादि मुदितो गृहे। हरिमित्रो युतस्ताभ्यां कियद्भिर्वासरैरगात् ॥१९३॥ मित्रस्नेहेन तेनाथ साधर्मिकधिया च तौ। पालितौ प्रासुकाहारैश्चक्रतुर्विविधं तपः ॥ १९४ ॥ प्रान्ते चानशनात्तेन सम्यग् निर्यापितौ मृतौ। सौधर्मे त्रिदशौ जातौ प्रौढौ पुण्यानुभावतः ॥ १९५ ॥ प्रदर्श्य हरिमित्रस्य सौवर्द्धिं सुहृदश्च तौ। तस्य वृद्धस्य दीक्षाया विधाय च महोत्सवान् ॥ १९६ ॥ स्वःशर्म च चिरं भुक्त्वा सर्वकामगुणात्मकम्। च्युत्वा चाऽत्रामभूवेह स्नेहस्तत्प्राग्भवादिति ॥ १९७ ॥ एतच्छ्रुत्वा नृपो जातीः स्वाः स्मृत्वा च विरक्तधीः। जगौ द्राक् प्रव्रजिष्यामि बन्धो! राज्ये रमे नहि ॥ १९८ ॥ किन्तु राज्यं च कन्यां च ददे कस्यादिशेति मे। ऊचे देवोऽथ मासान्तेऽत्रैवागामी पतिस्तयोः ॥ १९९ ॥ माघस्य शुक्लपञ्चम्यामशोकद्रोस्तले प्रगे। सरस्तीरे सुखं सुप्ते यस्मिंश्छाया न हीयते ॥ २०० ॥ शाखासुप्तस्य गृध्रस्य यस्योपरि मुखे स्वयम्। कीटा विशन्त्यसौ भावी पतिस्ते राज्यकन्ययोः ॥ २०१ ॥ युग्मम् ॥ राज्यकन्यापतीभूतो न्यायधर्मानुगः स ते। प्रजापुत्र्योः सुखाकर्ता चिरं राजन्! भविष्यति ॥ २०२ ॥ नृपः स्माहेति तत्त्वं चेद्भवाद्गीतोऽस्मि तद् व्रतम्। प्रातरेव ग्रहीष्यामि मैत्री सत्यीकृता त्वया ॥ २०३ ॥ मा प्रमादीः क्षणमपीत्युक्त्वा देवस्तिरोदधौ। धर्मजागरया राजा त्रियामां चात्यचिक्रमत् ॥ २०४ ॥ प्रातर्जगौ स मन्त्र्यादीन् प्रव्रजिष्याम्यहं द्रुतम्। मित्रेण बोधितो रात्रौ गृहे नैव रतिं लभे ॥ २०५ ॥ राज्यभारस्य वोढाऽस्ति न तवेति विलम्बय। इत्युक्ते मन्त्रिभी राजा देवादिष्टं जगाद

तत् ॥ २०६ ॥ अवोचन् सचिवाद्यास्तन्मासं राज्यभरं वह । जामात्रे तं समं पुत्र्या दत्त्वा कुर्या मनीषितम् ॥ २०७ ॥ राजोवाच नपुर्गेहे दह्यमाने जराग्निना । भीष्मे जिघत्सया मृत्युराक्षसे चाभिधावति ॥ २०८ ॥ कषायाहिषु फूत्कुर्वत्स्वभितो मोहनिद्रया । विषयावकरे सुप्तो राज्यक्ष्वेडतरोस्तले ॥ २०९ ॥ बोधितः सुहृदाऽस्म्यत्र कथमेवं भयाकुले । मन्त्रिणोऽत्र भवारण्ये स्थातुं क्षणमपि क्षमे ? ॥२१०॥ त्रिभिर्विशेषकम् ॥ लवसप्तमदेवानां लवान् सप्त विनायुषः । पुनः पातं विदन् को हि गमयेत्स्वल्पमप्यदः ? ॥२११॥ सचिवाः ! पालयित्वैतद्राज्यं कन्यामिमां च तत् । देवादिष्टाय देयास्तेत्याज्ञां भक्ताः प्रतीच्छत ॥२१२॥ तथेति प्रतिपन्ने तैः कृत्वा मारिनिवारणम् । दानादि च यथौचित्यं सर्वपूज्यान् प्रपूज्य च ॥ २१३ ॥ अन्तःपुरादिलोकस्य सर्वस्य रुदतोऽप्ययम् । वीरो राज्यश्रियं त्यक्त्वा गुरुपार्श्वेऽग्रहीद् व्रतम् ॥ २१४ ॥ युग्मम् ॥ श्रीकान्ताऽथ गिरा पत्युर्यावत्कन्याकरग्रहम् । स्थिता सैषाऽद्य तूद्वाह्य तां प्रातः प्रव्रजिष्यति ॥ २१५ ॥ तदेवं जगदे हेतुर्दाने ते राज्यकन्ययोः । नरवाहनभूपस्य दीक्षायां च महीपते ! ॥ २१६ ॥ इति मित्रद्वयीवृत्तं मयोक्तं मङ्गलप्रदम् । तदेतां प्रतिपद्यस्व कन्यां विश्वोत्तमां गुणैः ॥ २१७ ॥ पूर्वभूपालमन्त्र्युक्तं श्रुत्वेति सुमुखो नृपः । मौनेनापि प्रपेदे तां विस्मयानन्दमेदुरः ॥ २१८ ॥ निश्युद्वाह्याथ तां तेन शिक्षयित्वा च दम्पती । श्रीकान्ता प्राव्रजत् प्रातः स्वहिते को विलम्बते ? ॥ २१९ ॥ सुमुखोऽपि प्रियां दिव्यरूपस्नेहामवाप्य ताम् । राज्यादप्यधिकां मेने रेमे च सततं तया ॥२२०॥ व्यसमार्पीत् पितरौ साऽपि पत्या स्नेहात्सुखाकृता । प्रिययेव प्रियः प्रायः स्त्रीणां तरुणिमाऽध्वनि ॥ २२१ ॥ संजातनिश्चयो राज्यभोगभोग्येऽथ भूपतिः । चिन्तां मन्त्र्यादिषु न्यस्तराज्यभारोऽजहात्स्वयम् ॥२२२॥ प्रायोऽन्तःपुरमध्यस्थो गीतनाट्यादिभिः सदा । प्रियमाणश्चिरं रेमे भोगवत्या समं च सः ॥ २२३ ॥ भोगासक्तो नवो राज्यस्थित्यनज्ञोऽयमप्रभुः । इति मन्त्र्यादयोऽवज्ञां तस्याका-

पुरनाश्रवाः ॥ २२४ ॥ राज्ञः सेवकवर्गोऽथ सर्वस्तेषां वशोऽभवत् । साक्षाद्ददाति यः पायः स एवास्य प्रियो मतः ॥ २२५ ॥
सेनेशाद्याः सखायस्तु जगुस्तान् सचिवादिकान् । नास्यावज्ञा वरं सोऽस्मद्द्रुहो ! भाग्यसेवधेः ॥ २२६ ॥ पत्युस्सुतोऽपि
राज्यं नः सर्वमेतद्वशंवदम् । अस्मदायत्तसौख्यस्य नारीसक्तस्य कास्य भीः ? ॥ २२७ ॥ ततस्ते सुहृदो राज्ञस्तां प्रवृत्तिं न्य-
वेदयन् । चिन्ताक्रान्तो मनाक् सोऽपि निश्यशेताल्पनिद्रया ॥ २२८ ॥ निशीथेऽथामरः कश्चिदूचे जागर्षि पेलवक् । राज्ञोचे
बाधते चिन्ता निद्रां का सेत्यवक् सुरः ॥ २२९ ॥ मन्त्र्यादविनये राज्ञा प्रोक्तेऽभाषत निर्जरः । मा विषीद करिष्ये ते चिन्तितोप-
स्थितोऽर्थितम् ॥ २३० ॥ यतो माहेन्द्रदेवेनादिष्टोऽस्मि पुरनिर्जरः । गच्छता स्वसुहृत्पुनीपतेः स्नेहाद्वनावने ॥ २३१ ॥
इत्युक्त्वान्तर्हिते देवे निद्रां भेजे मुदा नृपः । प्रबुद्धोऽथ कृतप्रातःकृत्योऽध्यास्तोऽस्य पर्षदम् ॥ २३२ ॥ सोऽवक् सेवागतं
मुख्यं मन्त्रिणं समयाद्बहिः । यदैवानागतस्यान्तःपुरान्मे दुष्यतः पदौ ॥ २३३ ॥ ताभ्यंग्धि तदिमौ मन्त्रिन् ! स्वयं तैलेन
नैपुणात् । स दध्यौ राज्यगतोऽयं ममापीदृग् दिशत्यहो ! ॥ २३४ ॥ जगौ स सौकुमार्यात्ते नालं नक्रमयो पदौ । घृष्टोपलेन
कार्कश्यं नीता तवत्वद्वागौ कुरु ॥२३५॥ तदवज्ञागिरा क्रुद्धो भूपः प्रोवाच रे भटाः ! । एतं संताड्य बद्ध्वा च द्रुतं क्षिपत चारके
॥ २३६ ॥ आकर्ण्यापीति नो यावत् कुरुते कोऽपि किञ्चन । सुरं स्मृत्वाऽवदत् तावन् नृपश्चिन्नरान् क्रुधा ॥ २३७ ॥ सहसोत्तीर्य
ते भित्तेः प्राग्वदाज्ञा अनाश्रवान् । मन्त्र्यादींस्ताडयित्वाऽलं बबन्धुः क्रन्दतो द्रुतम् ॥ २३८ ॥ कारायां नीयमानास्ते जगुः स्वामी
त्वमेव नः । शरण्यशरणं दीनान् क्षमित्वाऽऽगो विमोचय ॥ २३९ ॥ ततः कृपोदयात्पूर्णो दृष्ट्वैतान् व्यमूमुचत् । तेऽथान्येऽपि
पदोर्लग्ना नृपं स्माहुर्भयद्रुताः ॥२४०॥ स्वामिन् ! महाप्रभावस्य द्रुमस्य रीढाफलस्य ते । प्रसद्योरीकुरुष्वास्मान् जीवितावधि किङ्करान्

॥ २४१ ॥ तत्पृष्ठेषु करं दत्त्वा सचकार नृपोऽथ तान् । दृशाऽपि प्रेरिताश्चक्रुराज्ञां राज्ञस्तदादि ते ॥ २४२ ॥ यतः—

"अवन्ध्यकोपस्य निहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः । अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषाऽऽदरः ॥१॥"

अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः । केसरी निष्ठुरक्षिप्तमृगपूगो मृगाधिपः ॥ २४३ ॥ सेनेशाद्याः सखायोऽथ नीता राज्ञा परां श्रियम् । तेष्वन्येषु च विन्यास्थद् राज्यभारं तथैव सः ॥ २४४ ॥ न्यायधर्मसुखाधारे नृपेऽस्मिन् राज्यधारिणि । युक्तं प्रजा अपीदृश्यो वभूवुरकुतोभयाः ॥ २४५ ॥ प्रतापश्च प्रभावश्च यशः कीर्तिश्च सर्वतः । प्रससुर्दूरतस्तस्य श्रियः सर्वास्तमभ्ययुः ॥ २४६ ॥ भोगवत्या समं भोगैर्गते काले कियत्यथ । द्वारपालः सभासीनमन्यदा तं व्यजिज्ञपत् ॥ २४७ ॥ स्वामिन् ! वीरपुरात्प्राप्तः पण्डितस्त्वां दिदृक्षते । मुञ्चेत्युक्तो नृपेणैष गत्वा तेन सहागमत् ॥ २४८ ॥ सर्वज्ञः शिवमातनोतु सविता चारोग्यमिन्दुः श्रियं भौमः शत्रुजयं बुधश्च विशदं बोधं धियं गीष्पतिः । सौभाग्यं भृगुजः शनिश्च विभुतां राहुः प्रतापोच्चयं केतुः कीर्तिततीः सुखानि च गुरुस्तुभ्यं सदा भूपते ! ॥२४९॥ द्विजोऽथेत्याशिषं दत्त्वोपाविशद्दापितासने । स्वागतादि च तं पृष्ट्वा नृपोऽपृच्छत् प्रयोजनम् ॥२५०॥ स स्माहान्तःसभायोग्यं राजन् ! विज्ञप्यमस्ति ते । विजनं कुरु तत्रेन ब्रुवेऽशङ्कः प्रयोजनम् ॥ २५१ ॥ ततो भ्रूसंज्ञयोत्थाप्य मृगान् भूपः सुहृत्त्रयम् । जीर्णमन्त्रिद्वयं चापि संस्थाप्य तमवीवदत् ॥ २५२ ॥ विप्रः स्माह समस्त्यत्र पुरं वीरपुराह्वयम् । निधानमिव लक्ष्मीणां वप्रकुण्डलिवेष्टितम् ॥२५३॥ नरसिंहो नृपस्तत्र त्रासितारिमृगव्रजः । सर्वै राजगुणैः श्लाघ्यः कौलधर्मानुगः परम् ॥२५४॥ अस्ति वीरमती पट्टराज्ञी तस्य गुणावनी । मन्त्री सर्वधुरीणश्च सान्वयाह्वो महामतिः ॥ २५५ ॥ तस्यामासीत् क्रमाद्राज्ञस्तनया विनयान्विता । जयश्रीरिति विख्याता सौभाग्यश्रीरिवाङ्गिनी ॥ २५६ ॥ धात्रा त्रिजगतः स्त्रीणां गुणसारैर्नु सा कृता । विभाव्यन्ते

पुरस्तस्यास्ता निस्सारास्ततोऽखिलाः ॥ २५७ ॥ यौवने प्राप सा रूपसंपदं यामनुत्तराम् । अविज्ञायैव तां विष्णुः कमलां बहु मन्यते ॥ २५८ ॥ माता तां वरचिन्तायै प्रैषीद्राज्ञोऽन्तिकेऽन्यदा । स्नेहात्सोऽप्यधिरोप्याङ्के मूर्ध्नि चुम्बन्नमोदत ॥२५९॥ जानन्निमित्तमष्टाङ्गमागात् कश्चिद्द्विजस्तदा । दत्त्वाऽऽशिषमुपाविक्षद् राज्ञोऽथो दापितासने ॥ २६० ॥ अथ स्वागतपृच्छाद्यैर्ढौकितैः स्त्रफलादिभिः । तं संप्रीणय्य नृपोऽपृच्छत् तां कनीं दर्शयन्निति ॥ २६१ ॥ मेधाविन् ! लक्षणान्यस्याः कानि के भाविनो गुणाः ? । भविता च वरः कीदृगिति मे पृच्छतो वद ॥ २६२ ॥ ततः पुस्तकमाकृष्य जगौ नैमित्तिको नृपम् । स्त्रीणां सामान्यतोऽथास्या लक्षणादि ब्रुवे शृणु ॥ २६३ ॥ तथाहि—

पादतलमुष्णमरुणं मांसलमस्वेदि मृदु समं स्निग्धम् । भूसुप्रतिष्ठितं स्यात् स्त्रीणां भोगप्रतिष्ठायै ॥ २६४ ॥ सूर्पपार्ष्णिर्भवेच्चेट्टी दीर्घपार्ष्णिश्च कोपना । वक्रपादतला निःस्वा दुःशीलोन्नतपार्ष्णिका ॥२६५॥ कुलटायाः पथि यान्त्या रेणुगणः क्षितितलात्समुच्छलति । ह्रस्वा दीर्घाः स्थूला विरलाः शस्या न चाङ्गुलयः ॥ २६६ ॥ यत्पादाङ्गुलिरेकापि भवेद्धीना कथञ्चन । येन केनापि सा सार्द्धं प्रायः कलहकारिणी ॥२६७॥ कन्यैव दुश्चरित्रा चाङ्गुष्ठादीर्घया प्रदेशिन्या । भुवमस्पृशदङ्गुलिका पत्युर्न हितावहा नारी ॥२६८॥ उच्चस्कन्धा कुलटा स्थूलस्कन्धापि भारवहनपरा । वक्रस्कन्धा वन्ध्या दुःखभृता रोमशः स्कन्धा ॥ २६९ ॥ ग्रीवा स्थूला विधवां वक्रा दासीं स्त्रियं वन्ध्याम् । सशिरा ह्रस्वा निःस्वां कुरुते दीर्घा पुनः कुलटाम् ॥२७०॥ द्व्यङ्गुलमानं चिबुकं वृत्तं पीनं सुकोमलं शस्तम् । स्थूलं द्विधा विभक्तं रोमशमत्यायतमशस्तम् ॥ २७१ ॥ द्वात्रिंशिता रदैः सुखमधोऽधिकैर्मातृभक्षिणी रमणी । अथ उपरि पुनर्विरलैः कुलटा विकटैश्च पतिरहिता ॥२७२॥ दारिद्र्यं मांसलया विशालया लम्बया भजति शोकम् । वर्णच्छेदं कलहं श्यामलया

जितया युवतिः ॥ २७३ ॥ मध्यनता स्थूलाग्रा द्विधाग्रभागातिदीर्घविस्तीर्णा । आकुञ्चितारुणाग्रा वैधव्यक्लेशदा नासा ॥२७४॥ मृगशशकेकिवराहाम्बुजपृथुनेत्रा प्रशस्यते नारी । सजलातिरक्तनयना सा नियतं जायते कुलटा ॥२७५॥ रोमनिभृते शिराले ह्रस्वे कुटिले श्रुती स्त्रियो निन्द्ये । त्र्यङ्गुलमानमनिम्नं स्त्रीणां सौभाग्यपदं भालम् ॥२७६॥ इति प्रायो वाच्याङ्गक्रमेण स्त्रीलक्षणानि ॥ यस्याः पाणितलं स्याद्बहुरेखं सा निहन्ति भर्त्तारम् । रूक्षं स्वरं विवर्णं रेखारहितं च दुःखाय ॥ २७७ ॥ अङ्कुशः कुण्डलं चक्रं मयूरश्छत्रमेव वा यस्याः पाणितले पुत्रवत्यास्तस्याः पतिर्नृपः ॥ २७८ ॥ प्राकारस्तोरणं पद्मं पूर्णकुम्भश्च मन्दिरम् । पाणिरेखासु यस्याः स्याद् राज्ञी दासकुलापि सा ॥ २७९ ॥ भृङ्गारासनवाजिकुञ्जररथश्रीवृक्षयूपेषुभिर्मालाचामरकुण्डलांकुशयवैः शैलैर्ध्वजैस्तोमरैः । मत्स्यस्वस्तिकवेदिकाव्यजनकैः शङ्खातपत्राम्बुजैः पादे पाणितले नरा नृपतयो राज्यो भवन्ति स्त्रियः ॥ २८० ॥ अङ्गुलमूले प्रसवस्य रेखाः पुत्रा बृहत्यः प्रमदाः सुतन्व्यः । अच्छिन्नदीर्घा बृहदायुषां ताः खल्वायुषां च्छिन्नलघुप्रमाणाः ॥ २८१ ॥ यद्भाले स्यात्त्रिशूलं सा स्वामिन्यखिलयोषिताम् । हसन्त्याः स्वस्तिको यस्या भाले दृश्येत सापि च ॥ २८२ ॥ मृदुरोमगात्रकोपा मृदुवाक्केशाल्परोमनिद्रा स्त्री । अल्पाहारस्वेदोदीरितहासा भवेत्पुण्यैः ॥ २८३ ॥ अतिकृशदीर्घह्रस्वस्थूलश्यामातिचम्पकाङ्गौरी । कपिला च रोमशोष्ठी घर्घररावाङ्गना त्याज्या ॥२८४॥ अन्तर्भुवो ललाटे वा मशकेन रमान्विता । राज्ञी वापि कपोले च वामे मिष्टान्नधी भवेत् ॥ २८५ ॥ हृदि तिलकलाञ्छने वा रक्ताभे धान्यधनसुखोपेता । राज्ञोऽम्बा पत्नी वा लोहितमशकान्नसाग्रजुषः ॥ २८६ ॥ कज्जलवर्णान् मशकान्नासाग्रे भवति पांसुला हीना । मपतिलकलाञ्छनयुतौ गुल्यौ धनधान्यहीना याः ॥२८७॥ मशकस्तिलकं लाञ्छनमुक्तस्थानैर्विनाशुभं वामे । अङ्गे पुनरपसव्ये सुदृशां क्लेशावहं बहुशः ॥२८८॥ यस्या वदनाल्लाला शयने हसने च नेत्रयोर्बाष्पं गल्ल-

युगं वा कूपान्वितं भवेत्सा नियतमसती ॥ २८९ ॥ यस्याः स्वैरं यान्त्या दैववशात्पटपटायते वसनम् । त्याज्या प्रहसनशीला सशब्दगमना च सा नारी ॥ २९० ॥ रदान् पिनष्टि सुप्ता या निशि यत्तच्च भाषते । नदीनगलतादीनां नाम्ना च त्यज्यतेऽङ्गना ॥२९१॥ आवर्त्ता वामभागेऽपि स्त्रीणां संहारवर्त्तयः । न शुभाः शुभाश्च भाले दक्षिणाङ्गेऽथ पृष्ठितः ॥ २९२ ॥ अथ संग्रहः—पिङ्गाक्षी कूपगल्ला खरबहुवचना स्थूलशीर्षोर्द्धकेशी लम्बोष्ठी दीर्घवक्त्रा प्रविरलदशना श्यामलम्बोष्ठजिह्वा । शुष्काङ्गी संहतभ्रूः सरवबहुहसा नासिकाक्रान्तवक्त्रा सा कन्या वर्जनीया सुखसुतरहिता भ्रष्टशीला च नारी ॥ २९३ ॥ पीनोरुः पीनगल्ला समसितदशना पद्मपत्रायताक्षी बिम्बोष्ठी तुङ्गनासा गजपतिगमना दक्षिणावर्त्तनाभिः । स्निग्धाङ्गी बन्धुरभ्रूः स्मितकमलमुखी सुस्वरा चारुकेशी भर्त्ता तस्याः क्षितिशो भवति च सुभगा पुत्ररम्या च नारी ॥ २९४ ॥ गुरुदेवपितृश्वशुरादिषु भक्ता भर्तृबन्धुषु स्निग्धा । धर्मगृहाचारज्ञाऽनलसा विनयौचितीदक्षा ॥२९५॥ गीतादिकलारसवत्यादिकविज्ञानशीलभृल्लभते। सुखमप्यलक्षणा ननु सलक्षणाऽप्युक्तविपरीता ॥२९६॥

लक्षणालक्षणान्येवं श्रुत्वा सामान्यतः स्त्रियाः । निमित्तज्ञं नृपः स्माह विस्मयानन्दमेदुरः ॥ २९७ ॥ किञ्चिज्ज्ञानमपि ज्ञानिन्! शुश्रूषेऽहं विशेषतः । लक्षणान्यथ कन्यायाः श्रमोऽयं यत्फलेग्रहिः ॥ २९८ ॥ जगौ नैमित्तिको राजन्! कन्येयं शुभलक्षणा । कल्पवल्लीव भर्त्रादेर्भविताऽभीष्टदायिनी ॥ २९९ ॥ चक्राद्यङ्कितपाण्यंह्रिर्भाले स्वस्तिकभासुरा । येनोपयंस्यते भावी स सेव्यः सर्वभूमिपैः ॥ ३०० ॥ एषा पुत्रवती देवगुरुभक्ता यशस्विनी । सुशीला भाविनी नित्यं भर्तुरिष्टा सुखान्विता ॥ ३०१ ॥ श्रुत्वेति मुदितो राजा दत्त्वा दानं विसृज्य तम् । कृत्वाऽथ दिनकृत्यानि निशि सुष्वाप सप्रियः ॥ ३०२ ॥ यामिन्याः पश्चिमे यामे विनिद्रोऽचिन्तयच्च सः । कस्य भाग्यवतः कन्या देयेयं सर्वलक्षणा ? ॥ ३०३ ॥ यस्मै च दास्यते भावी स हि सेव्यो मयाऽप्यहो ! ।

ज्ञानिनो वितथं यन्न शास्त्रसंवादिभाषितम् ॥ ३०४ ॥ स्वोत्पन्ना वर्धिता यत्नादभीष्टा पालिताऽप्यहो ! । परस्यैवोपकाराय कृपणश्रीरिवाङ्गजा ॥ ३०५ ॥ धिग् दैवं मम येनैषा पुत्रीत्वेनोदपद्यत । उदपत्स्यत चेद्भार्याऽभविष्यं तज्जगज्जयी ॥ ३०६ ॥ अथवा मदधीनैवास्त्येषा बालाऽधुनाथवा । उपयच्छे यदीमां तत्को निषेद्धा स्ववस्तुनि ? ॥३०७॥ स्वोत्पन्नवर्द्धितायास्तद्रूपेणातिसुरस्त्रियाः । कल्पवल्लेरिवैतस्या गृह्णे भोगफलं न किम् ? ॥ ३०८ ॥ भोगे दोषोऽस्ति चेन्नार्यास्तदा स्वस्य परस्य का ? । अथ नास्त्यात्मनस्तृप्तेस्तदा स्वस्य परस्य का ? ॥३०९॥ भूतानां न विशेषोऽस्ति पञ्चानां स्वपरस्त्रियोः । दोषस्तत्कोऽङ्गजाभोगे दृश्यो धूर्तोक्तिमोहितैः ? ॥ ३१० ॥ स्नेहपात्रं कलत्रं तु नापमान्यं सुखैकभूः । ध्यात्वेत्यनुमतिं तस्या जिघृक्षुः स्माह स प्रियाम् ॥ ३११ ॥ प्रिये ! त्वदनुमत्या चेत्पाणौ कुर्वे जयश्रियम् । सर्वराजेषु तत्पृष्ठ्याः पाणौ कुर्वे जयश्रियम् ॥ ३१२ ॥ कर्णौ पिधाय साऽप्याख्यत्स्वामिन् ! ब्रूषे किमीदृशम् ? । लोकशास्त्रविरोधेन भवद्वयविघातकृत् ॥ ३१३ ॥ उक्त्वा नैमित्तिकोक्तं तज्जगौ भूपोऽस्ति कारणम् । बह्वीष्वपि न पुत्रोऽभूत् भवतीषु चिरादपि ॥३१४॥ विना तं चास्ति राज्यस्य धर्ता मदनु को नु मे ? । इयं पुत्रवती चोक्ता प्रजार्थं कामये ततः ॥ ३१५ ॥ वेदेऽपि श्रूयते पुत्रीं प्रजानाथोऽगमन्न किम् ? । वधूं द्वैपायनोऽयासीत् शास्त्रैर्नैतद्विरुध्यते ॥ ३१६ ॥ किं चैवमवियोगः स्यादावयोरिष्टयाऽनया । सुनिश्चितहिते कार्ये लोकोक्तिः केन गण्यते ? ॥ ३१७ ॥ यदुक्तम्—

" सर्वथा स्वहितमाचरणीयं किं करिष्यति जनो बहुजल्पः । विद्यते स नहि कश्चिदुपायः सर्वलोकपरितोषकरो यः ॥ १ ॥ "

मा सपत्नीभयं कार्षीः सर्वं तव वशे हि मे । इच्छाम्यनुमतिं स्नेहादेव तेऽस्म्यभयो नृपः ॥३१८॥ क्षमे बोधयितुं नैतं बोधयिष्यन्ति मन्त्रिणः । विचिन्त्येत्यवदद्राज्ञी प्रमाणं मन्त्रिणोऽत्र वः ॥३१९॥ सखा हि रोगिणो वैद्यो भवदुःखोद्विजो मुनिः । गृहिणः कामिनः पत्नी सचिवश्च महीभुजः ॥ ३२० ॥ यदुक्तम्—

"स किंसखा साधु न शास्ति योऽधिपं हितान्न यः संशृणुते स किंप्रभुः। सदानुकूलेष्विह कुर्वते रतिं नृपेष्वमात्येषु च सर्वसंपदः॥१॥"

कृतप्रातस्त्यकृत्योऽथाऽध्यास्ते यावत्स पर्षदम्। तावद्वीरमती दास्या मन्त्रिणस्तद् न्यवेदयत् ॥ ३२१ ॥ शक्त्या प्रतिकरिष्यामीत्युक्त्वा सोऽगान्नृपान्तिके। यथोचितमथाध्यास्त पर्षद्राज्यस्य मण्डना ॥ ३२२ ॥ मन्त्र्याद्यनुमतिं भूपो जिघृक्षुः स्वेष्टसिद्धये। अथावग् भोः! प्रजा राज्ञः कस्मिन् स्थाने? निवेद्यताम् ॥ ३२३ ॥ मन्त्री ज्ञाततदाकूतो ब्रूते यावन्न किञ्चन। तावत्सेनाधिपः शूरोऽपत्यस्थाने जगाविति ॥ ३२४ ॥ राजोचे तर्हि वः पुत्रीर्दोषोऽस्त्युद्वहतो मम। नवेति ब्रूत नेत्युक्ते सेनेशेनाब्रवीन्नृपः ॥३२५॥ स्वपुत्र्या अपि तद्वत्तन्न दोषोऽस्ति करग्रहे। राज्ञोऽपत्यत्वसाधर्म्यात्पाणौकुर्वे तदात्मजाम् ॥ ३२६ ॥ जगौ सेनेश्वरः स्वामिन्नवाच्यं किं वदस्यदः?। पामरेष्वप्यकृत्यं यन्मात्स्यन्यायमवर्तनम् ॥३२७॥ महताऽपि न भूपेन कार्यं लोकापवादकृत्। पोतः प्रौढोऽणुनाऽप्यब्धौ न किं छिद्रेण मज्जति? ॥३२८॥ स्त्रियः सद्रूपलावण्याः सन्त्यगण्याः सुलक्षणाः। परिणीय कुलीनास्ता विरमास्मादकृत्यतः ॥ ३२९ ॥ नयः प्रतापः प्रभुता विवेकः कीर्तिश्च कोशश्च बलं यशश्च मन्त्रश्च शक्तिश्च दशासवोऽमी राज्यस्य जीवस्य यथेन्द्रियाद्याः ॥३३०॥ राज्यजीवितधनैरपि धीराः क्रीणते स्थिरतरां सुभगां याम्। साऽपवादलवभङ्गुरनार्यै किं विडम्बयसि कीर्तिमिमां स्वाम्? ॥३३१॥ उपदेशघृतेनैवं राज्ञः क्रोधाग्निरज्वलत्। गरो हि पयसः पानाद्भुजङ्गस्य प्रवर्धते ॥ ३३२ ॥ स्वाभिप्रायविघात्युक्तं बुद्ध्वा सेनाधिपस्य तत्। क्रुद्धो राजाऽब्रवीन्मूढ! स्वेनोक्तं किं न बुध्यसे? ॥ ३३३ ॥ निर्ग्राह्योऽसि ममाप्यग्रे दुष्टैवं व्याहृतं वदन्। क्रुधैवं वन्धयित्वा तं चारकेऽक्षेपयन्नृपः ॥ ३३४ ॥ विधाय विजनं चाथ व्यासान्नैमित्तिकोदितम्। मन्त्रिणः स्वाशयं चैतदनुमत्यै जगौ नृपः ॥ ३३५ ॥ दण्डं शूरस्य वीक्ष्यैषोऽप्यनेहोहरणेच्छया। तं कौलधर्मगं जानन्नुपायविदुरोऽवदत् ॥३३६॥ अतिरम्भां त्वमेवा-

ईस्युपयन्तुमिमां कनीम् । को हि कामदुघां स्वस्य विक्रीणीते गृहोद्गताम् ॥३३७॥ केवलं दुर्मुखो लोको यत्तथेन न भाषते। जायते कार्यसिद्धिश्च तमुपायं शृणु प्रभो ! ॥३३८॥ कन्यैषा नृप ! षण्मासीं यावद्गेहे ममाप्र्यताम् । तवैव दासदासीभी रक्ष्यमाणा च खेलतु ॥ ३३९ ॥ मन्त्रिणा निजपुत्रीयं लालनादिसमाधये । अर्पिता निरपत्याया राज्ञ्या जन्मदिनादभूत् ॥३४०॥ संप्राप्तयौवनोद्वाहहेतोः संप्रत्यगृह्यत । इति लोके प्रवादश्च प्रसिद्धिमधिरोप्यताम् ॥३४१॥ काले वरान्तराप्राप्त्या दास्याम्यथ तवैव ताम् । एवं परिणयन्निष्ट-सिद्धावपि न निन्द्यसे ॥३४२॥ हृष्टः श्रुत्वेति भूपस्तं शंसंश्चक्रे तथैव तत् । ईदृशेष्वेव कार्येषु सफला मन्त्रिणां हि धीः ॥३४३॥ यतः—

" उदन्वच्छिन्ना भूः स च निधिरपां योजनशतं सदा पान्थः पूषा गगनपरिमाणं कलयति ।
इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥ १ ॥ "

अन्यदारेकमाणास्तं शल्यमिष्टविघातकम् । रहः सेनाधिपं हन्तुं नृपो मातङ्गमादिशत् ॥३४४॥ ज्ञात्वा मन्त्री तु तद् बुद्धया भूरि-द्रव्यप्रदानतः । मातङ्गात्तं विमोच्य स्वगृहे छन्नमधारयत् ॥ ३४५ ॥ मातङ्गोऽपि धिया कृत्वा तादृग्लेप्यमयं शिरः । दूरात् प्रदर्शयन् सायमवञ्चयत भूपतिम् ॥ ३४६ ॥ स्वसुताकामनातप्तो दिनानि गणयन्नयम् । पण्डितैर्बोध्यमानोऽपि नाबुध्यत कथञ्चन ॥ ३४७ ॥ मन्त्री सेनाधिपो वीरमती राज्ञी तथाऽन्यदा । परिणामहितं कार्यं व्यमृशन् मिलिता रहः ॥ ३४८ ॥ ऊचे राज्ञ्या त्वया मन्त्रिन् ! शक्तो बोधयितुं न चेत् । अबोध्यस्तदयं नूनं चिन्तयौपयिकान्तरम् ॥ ३४९ ॥ सेनाधीशोऽवदत्स्वेन म्रियते मार्यतेऽपि वा । न वाऽकृत्यमिदं राज्ञो मृष्यते विश्वगर्हितम् ॥ ३५० ॥ उवाच सचिवः स्वस्य मृती राज्ञोऽपि मारणम् । धर्मज्ञानां न युज्येत नाप्युदर्क-हिताय च ॥ ३५१ ॥ किन्तु राजान्तरं न्यस्य तस्मै कन्या प्रदीयते । आत्मभिश्च तमाश्रित्य सप्रजैः स्थीयते सुखम् ॥ ३५२ ॥

योग्यः कश्चित् परं मृग्यः कुलीनो वलवान् युवा । न्यायधर्मगुणाढ्यश्च य एतं जेतुमीश्वरः ॥ ३५३ ॥ गजानीकाधिपः शीलस्तला-
रक्षश्च मङ्गलः । सिद्धो दूतश्च मे सन्ति वशेऽदस्तं न दुष्करम् ॥ ३५४ ॥ दूतमाकार्य पृच्छयेत तादृक्पुरुषसंभवः । वहुदृश्वा हि
जानाति स चेद्वोऽभिमतं भवेत् ॥ ३५५ ॥ अथ सेनेशराज्ञीभ्यामेवमस्त्वित्युदीरिते । मच्छन्नाकारितो दूतः पृष्टस्तैस्तन्मुदाऽवदत् ॥
३५६ ॥ अस्ति चन्द्रपुरे राजा युवा सर्वगुणोत्तरः । स्वभाग्यार्जितराज्यश्रीः सुमुखो देवतासखा ॥ ३५७ ॥ गुणवार्धेः पुरस्तस्य
तेजसातिदिनप्रभोः । भूपाः कूपा इवाऽऽभान्ति तारका इव वाऽखिलाः ॥३५८॥ दृशाऽपि प्रेरितैश्चित्रभटैर्यस्य वशीकृताः । राजन्याः
किङ्करायन्ते सोऽस्ति वोऽर्थितसाधकः ॥ ३५९ ॥ हृष्टा मन्त्र्यादयो राज्ञः शङ्कानुत्पत्तये ततः । मामाकार्य रहो मित्रं सर्वमेतदबूबुधन्
॥ ३६० ॥ अन्यासाध्यमिदं कृत्यमित्युक्त्वाऽभ्यर्थ्य चादरात् । त्वदाकारणहेतोर्मां प्राहैषुश्च विचक्षणाम् ॥ ३६१ ॥ मन्त्री विज्ञाप्य
राजानं शङ्कान्तरनिवृत्तये । स्वयं राजाप्यथोद्वाहसामग्रीं निरमापयत् ॥ ३६२ ॥ आगतोऽत्रेत्यमन्ये त्वां दृष्ट्वा जन्म फलेग्रहि । पाणौ-
कुरु तदागत्य द्विधाऽप्यथ जयश्रियम् ॥३६३॥ त्वयि वीरपुरं प्राप्ते कौलो राजा स नङ्क्ष्यति । राज्यश्रीश्च जयश्रीश्च श्रयिष्यति सना-
थताम् ॥ ३६४ ॥ स्त्रीमात्रं सा च नो चिन्त्या गुणैर्विश्वत्रयोत्तरा । यां चिकीर्षुर्विधिश्चक्रेऽभ्यासार्थं तु सुरस्त्रियः ॥ ३६५ ॥ तयैव
पत्न्या तव रूपसंपद्भवेत् कृतार्था हि हरेः श्रियेव । कस्यापि साऽप्यर्हति दारभावं न त्वां विनाऽन्यस्य हरिं यथा श्रीः ॥ ३६६ ॥
ऋते तया भासि न राज्यलक्ष्म्या सृजन्नपि त्वं भुवनोपकारम् । संतर्पयन्नप्यवनीं घनोऽम्बुवृष्ट्या विना राजति विद्युता न ॥३६७॥
प्रजानुकम्पाग्र्यफले प्रवृत्तस्त्वं लप्स्यसे तामथवा प्रसङ्गात् । शैत्याय पृथ्व्या दधदुन्नतिं किं संयुज्यते नो दिवि विद्युताऽब्दः ? ॥३६८॥
व्यजिज्ञपं कार्यसुतत्त्वमेवं जानीहि विद्वन्नथ चात्मकृत्यम् । श्रुत्वेति विमोक्तुमथो नरेन्द्रो व्यलोकतास्यं सचिवादिकानाम् ॥ ३६९ ॥

जगाद मन्त्री नयवर्त्मवेदिन् ! किमुच्यसे षड्गुणसंभृतस्त्वम् ?। हितोपयोगा हि परं प्रजानां भवादृशां भुव्यवतारसृष्टिः ॥ ३७० ॥
जयश्रियं वीरपुरमजार्थं कौलं प्रमथ्नन् नृपमाप्स्यसि त्वम् । अब्धिं सुरेभ्यो मथतो हरेर्न बभूव पाणिग्रहणं श्रियः किम् ? ॥ ३७१ ॥
उत्साहभाजां परकृत्ययत्ने कलङ्कपङ्कं तनुते विलम्बः । समर्थयन्ते स्म ततस्तमर्थं हुंकारकृत्या युवराजमुख्याः ॥ ३७२ ॥ सभां विसृ-
ज्याथ कृतार्हत्कृत्यः ससैन्यविभो नृपतिश्चचाल । शुभे क्षणे वीरपुरं प्रति द्राक् कार्याविलम्बो हि जिगीषुचिह्नम् ॥ ३७३ ॥ प्राप्तो
वीरपुरासन्ने प्रैषीद् दूतं स तत्पतेः । गत्वा नत्वा नृपं सोऽपि तत्पृष्टो वाक्पटुर्जगौ ॥ ३७४ ॥ सुमुखो नाम भूपस्त्वां प्राप्तस्त्वद्देश-
सीमनि । जिगीषुरादिशत्येवं नयविक्रमकोविदः ॥ ३७५ ॥ दत्त्वा जयश्रियं कन्यां राजन् ! सेवां कुरुष्व मे । भुङ्क्ष्व पित्रार्पितं
राज्यमनर्होऽपि च नास्तिकः ॥ ३७५ ॥ नो चेत्सद्यो रणावन्यां देहि क्षेत्रां जयश्रियम् । मा वादीर्न्नार्पितं नेति च्छलघाती हि नो
महान् ॥ ३७७ ॥ अथ क्रुद्धो नृपोऽवादीत् क एष सुमुखो नृपः ? । विमुखोऽपि न यो गन्तुं संख्ये शक्ष्यति मे पुरः ॥ ३७८ ॥
नास्तिकं वैरिणां यस्य पुरः सोऽहं हि नास्तिकः । तिष्ठति क्षणमेकं यस्तच्छ्रद्धां पूरये रणे ॥ ३७९ ॥ दध्यौ हृष्टोऽथ दूतोऽस्य
गिरा दैवसमुत्थया । श्रद्धापूर्तिर्ध्रुवं युद्धे भविता स्वामिनो मम ॥ ३८० ॥ जगौ स चाशयोऽयं चेत्तद्गेहे नर्दितां त्यज । सद्यः सन्नह्यतां
युद्धे कातर्यं तद्विलम्बिता ॥३८१॥ याहि रे ! प्राप्त एवाहमित्युक्त्वा सोऽप्यवादयत् । रणढक्कां स्वसैन्यानां मेलनाय कृतत्वरम् ॥३८२॥
दूतो गत्वाऽथ तत्सर्वमाख्यत्सुमुखभूभुजे । नरसिंहनृपोऽप्याशु ससैन्यो निर्ययौ पुरात् ॥ ३८३ ॥ दिशो बधिरयन् वाद्यनादैः
स गजगर्जितैः । क्षोणीमश्वपदाघातैः रथचक्रैश्च कम्पयन् ॥ ३८४ ॥ युग्मम् ॥ दूरेऽपि द्राक् स्वदेशस्य रणोत्साहात्स सीम्न्यगात् ।
द्विपाऽऽत्मनीदृदाक्रान्तिं वीरमानी सहेत कः ? ॥३८५॥ हास्तिकं हास्तिकेनाश्वमश्वीयेनामिलंस्ततः । योधा योधैर्द्वयोश्चम्वो रथ्याश्च

रथकव्यया ॥ ३८६ ॥ रजश्छन्नग्रहेशोऽथ शस्त्रौघद्योतिताम्बरः । प्रावर्तत रणस्तेषां वाद्यैर्नादितदिक्ततिः ॥ ३८७ ॥ खड्गैः
कुन्तैः शरैश्चक्रैर्मुद्गरैश्च गदादिभिः । यष्टिभिर्मुष्टिभिश्चापि भटा जघ्नू रणे रिपून् ॥ ३८८ ॥ शूरैः पातितहस्त्यश्वयोधैर्भग्नै रथैः क्रमात् ।
दुःसञ्चरधरः सोऽभूद् रणो विश्वभयङ्करः ॥ ३८९ ॥ तत्रैवं जायमानेऽस्मिन् मन्त्रिशीलादयोऽथ ते । साविर्भूतचमूनाथाः कियद्भिः
सैनिकैः सह ॥ ३९० ॥ पृथग्भूत्वा पुरे गत्वा संकेतान्मिलिता द्रुतम् । कोशदुर्गाद्यधिष्ठाय गोपुरेऽस्थू रणोद्यताः ॥ ३९१ ॥ युग्मम् ॥
नृसिंहोऽथ नृपो भग्नबलः सुमुखसैनिकैः । अपसृत्य रणाद् दुर्गाश्रयबुद्ध्या पुरेऽविशत् ॥ ३९२ ॥ निरुद्धः शूरशीलाद्यैर्ज्ञात्वा वि-
घटितांस्तु तान् । हन्यमानोऽरिसैन्येनानेशदल्पपरिच्छदः ॥ ३९३ ॥ युग्मम् ॥ दीनो निःशरणो गत्वा गिरिकूटगिरौ च सः । भीत्या
वनेचरैस्तस्थौ विषमे विहितोटजः ॥ ३९४ ॥ नश्यन्तं तमुपेक्ष्याथ मन्त्र्यादीन् मिलितांश्च तान् । सत्कृत्य तैर्युतो भूपः सुमुखः
प्राविशत् पुरे ॥ ३९५ ॥ सिंहासने निवेश्याथ पूर्वभूपस्य सोत्सवम् । अभ्यषिच्यत मन्त्र्याद्यै राज्ये वीरपुरस्य सः ॥ ३९६ ॥ अथो
भूपानुमत्या ते मन्त्र्याद्याः स्वामिभक्तितः । प्राहैषुर्नरसिंहाय पत्नीः कोशं च भूभुजे ॥ ३९७ ॥ हृष्टः संवाधनं कृत्वा सुमुखाज्ञाव-
शात्सुखम् । तत्र रेमे स पत्नीभिः समयज्ञा हि कोविदाः ॥ ३९८ ॥ सा तु वीरमती राज्ञी नान्वगान्नास्तिकं पतिम् । दुःखिता मृत्यु-
मिच्छन्ती बोधिता सुव्रतार्यया ॥ ३९९ ॥ संवेगात्त्यक्तसंसारसुखेच्छा भवभीरुधीः । समर्प्य मन्त्रिणः पुत्रीं प्रव्रज्यामाददेऽर्हतः ॥
॥ ४०० ॥ अथ मन्त्री महाबुद्धिर्बुद्ध्या प्राक् स्ववशीकृताम् । ददौ जयश्रियं लग्ने शुभे सुमुखभूभुजे ॥ ४०१ ॥ परिणीयोत्सवैस्तां
स देवानामपि दुर्लभाम् । अन्योऽन्यं प्रेमसंक्रान्त्या रेमे स्वैरं तया सदा ॥ ४०२ ॥ दर्शनादपि यां तस्याः स भूपः प्रीतिमश्नुते ।
तयाऽप्यैन्द्रमहो जिग्ये रम्भासंभोगजं सुखम् ॥ ४०३ ॥ यच्च संभोगजं तस्या भुङ्क्ते स सुखमन्वहम् । उपमा तस्य नैवास्ति तद्गुणाना-

मिव कश्चित् ॥ ४०४ ॥ अथ मन्त्री महाबुद्धिः शूरः सेनाधिपश्च सः । गजानीकाधिपः शीलस्तलारक्षश्च मङ्गलः ॥ ४०५ ॥ सिद्धो दूतो द्विजः सोऽपि धर्मपक्षस्थिता इति । उपकारकृतो राज्ञा प्रापिताः प्रौढसंपदः ॥ ४०६ ॥ युग्मम् ॥ न्यस्ताः स्वस्वपदे तेऽथ राज्यभारं दधुर्मुदा । राष्ट्रकोशादिभिर्भूपो ववृधे च दिने दिने ॥ ४०७ ॥ कियत्यथ गते कालेऽन्यदा तक्षशिलापुरात् । आजगामौष्ट्रिको मूलराजधान्या महीभुजः ॥ ४०८ ॥ स द्वाःस्थावेदितो भूपानुमत्यागत्य पर्षदि । नत्वा भूपमुपाविक्षत् भूभुजा दापितासने ॥ ४०९ ॥ प्रीतः स्वागतभद्रादिप्रश्नैः पृष्टं निवेद्य सः । विज्ञप्तिमार्पिपद्राज्ञे सोन्मुद्रय्यैतां त्ववाचयत् ॥ ४१० ॥ तथाहि—

स्वस्ति वीरपुरे राजराजं श्रीसुमुखप्रभुम् । इतस्तक्षशिलापुर्या मन्त्री सुमतिनामकः ॥ ४११ ॥ नत्वा विज्ञपयत्येतत् कुशलं त्वत्प्रसादतः । अनुकम्प्यश्च सौवाङ्गारोग्यादिज्ञापनादहम् ॥ ४१२ ॥ युग्मम् ॥ कार्यं च स्वामिनो भाग्यसौभाग्यादिश्रुतेरिह । श्रुतीनाममृतासाराप्लवो भवति नोऽनिशम् ॥ ४१३ ॥ परं नेत्राणि ताम्यन्ति प्रभो ! त्वद्दर्शनक्षुधा । राज्ञी कीर्तिमती चोज्झत्स्नानादितनुसंस्क्रियाम् ॥ ४१४ ॥ योगिनीव परं तत्त्वं ध्यायन्ती त्वां निरन्तरम् । सिक्तेऽपि सा दृगम्भोभिस्तापौघं हृदि विन्दति ॥ ४१५ ॥ सा दह्यमानसर्वाङ्गी दुर्वारविरहाग्निना । प्राणास्ति प्राणसंदेहं विना त्वत्सङ्गमौषधम् ॥ ४१६ ॥ तस्याश्च जीवनोपायं स्वयं वेत्सि किमुच्यते ? । किञ्च भूपस्त्वया सूरतेजा योऽधिकृतोऽभवत् ॥ ४१७ ॥ ज्ञात्वा निःस्वामिकं राज्यं छलान्वेषी स सांप्रतम् । बहुभ्वेवोपदोद्रोति स्त्रीपश्वाद्यपहारतः ॥ ४१८ ॥ अभिषेणयितुं तं च वाञ्छामि स्वाम्यनुज्ञया । परं सोऽतिप्रचण्डत्वाद्विजयं संशयं नयेत् ॥ ४१९ ॥ द्रुतमागत्य तत्तात ! प्रजा राजन् ! सुखाकुरु । सपौरो राजवर्गौघः सुखी नौतीति मङ्गलम् ॥ ४२० ॥

विज्ञप्तेरवधार्यैवमर्थं भूपः क्रुधा रिपौ । पत्नीप्रजाः सुखाकर्तुं गन्तुमुत्कण्ठुलोऽभवत् ॥ ४२१ ॥ विमृश्य मन्त्रिभिः साकं कृत्वा

तद्राज्यसौष्ठवम् । जयश्रिया सहागच्छत् सोऽथ चन्द्रपुरे द्रुतम् ॥ ४२२ ॥ राज्यचिन्ताकरं शिक्षापूर्वं विन्यस्य तत्र सः । लात्वा भोगवतीं चाथाचलत्तक्षशिलां प्रति ॥ ४२३ ॥ सैन्यैराप्लावयन् पृथ्वीं सरांसि पथि शोषयन् । रजोभिश्छादयन्नाशाः प्राप तक्षशिलां नृपः ॥ ४२४ ॥ मन्त्रिसामन्तपौरैः स पूज्यमानः प्रविश्य ताम् । आनन्दं जनयामास सार्वलौक्यस्य निस्तुलम् ॥४२५॥ समये च प्रियां कीर्तिमतीमालिङ्गनादिभिः । संसारसुखसर्वस्वं प्रेम्णा भूभुगबूभुजत् ॥ ४२६ ॥ सोऽन्यदाऽथ स्वयं गत्वा चतुरङ्गचमूवृतः । सूरतेजसमाह्वास्त रणे पण्डितमानिनम् ॥ ४२७ ॥ कृत्वा चिरं रणं घोरं भङ्क्त्वा तस्य बलानि च । योधयन् द्वन्द्वयुद्धेन सुमुखस्तमबन्धयत् ॥ ४२८ ॥ शरणं मे त्वमेवेति वादिनं स विमुच्य तम् । गत्वा तद्राजधान्यां च न्यास्थत्सत्कृत्य सेवकम् ॥ ४२९ ॥ कन्यां प्रीतिमतीं स्त्रैणगुणसर्वस्वधारिणीम् । स ददौ नररत्नाय सुमुखायोग्रतेजसे ॥ ४३० ॥ अथो सुमुखभूपालस्तदुपायनसंभृतः । सप्रियः स्वपुरीमेत्य वार्ध्यन्तामभुनग् महीम् ॥ ४३१ ॥ भूपालाः करदाः सर्वे प्रजाश्चाकरदाः कृताः । दानैर्वनीपकास्तेन चक्रिरे चाऽवनीपकाः ॥ ४३२ ॥ तृणेषु गौरवं भेजुस्तस्य वैरिनृपा रणे । पारणेषु च ते केचिद्वने कन्दफलादिषु ॥ ४३३ ॥ एकाकित्वे विदेशेऽपि कन्याराज्यत्रयाप्तितः । स्वस्य पुण्यानि निर्णीय स तेषु रतिमादधे ॥ ४३४ ॥ अथ मन्त्र्यादिषु प्राग्वद्राज्यभारं सुहृत्सु सः । न्यस्य निःशङ्कधी रेमे विषयेष्वखिलेष्वपि ॥ ४३५ ॥ तास्वरंस्ताधिकं प्रेम्णा प्रियासु चतसृष्वयम् । अस्य कीर्तिः प्रतापश्च हरित्सु तु दशस्वपि ॥ ४३६ ॥ सूरतेजा नृपः सोऽथाभिभवं तत्कृतं स्मरन् । अन्यदा सद्गुरूपान्ते धर्मं श्रुत्वा प्रबुद्धवान् ॥ ४३७ ॥ अपुत्रोऽत्यन्तवैराग्याज्जामात्रे सुमुखाय सः । दत्त्वा राज्यं प्रवव्राज तपोभिश्रेष्ठभागभूत् ॥ ४३८ ॥ एवं चतसृभी राज्यश्रीभिरेवास्य जज्ञिरे । पत्न्यस्ताः ससपत्नीकाः सुमुखस्य गुणोत्तराः ॥ ४३९ ॥ धीरो ललितलावण्यरूपयौवनभाक् स च । पद्मिनीषु पपौ

भोगरसं तासु द्विरेफवत् ॥ ४४० ॥ कदाचिन्नर्तयन् पत्नीर्गीतवाद्यपरः स्वयम् । क्रीडन्नन्तःपुरे स्वैरं विनोदैः सुखमन्वभूत् ॥४४१॥ प्रियाः कदाचिदालिङ्ग्य तुल्यं तदधरान् पिबन् । पञ्चभूतात्मकैकाङ्ग इवाभून्मतभाग्गुरोः ॥ ४४२ ॥ यथर्तु स यथाकामं क्रीडावापीवनादिषु । रेमेऽखिलैः कलाकेलिकेलिभेदैः प्रियान्वितः ॥ ४४३ ॥ अर्थतो विशेषकम् ॥ इत्येकात्मेव पत्नीभिर्भक्तायत्तपरिच्छदः । निःशङ्कः स निरातङ्को वाञ्छोपनतभोगभाग् ॥ ४४४ ॥ कलाललितविज्ञानैर्विनोदैः शास्त्रगैरपि । प्रायः स्मरानुगैः खेलन् निनाय समयं बहुम् ॥ ४४५ ॥ युग्मम् ॥ कालादजीजनत्पुत्रांश्चतसृष्वपि तासु सः । तेजस्विनो नवाम्भोदो मणीन् रत्नखनीष्विव ॥४४६॥ न्यायधर्ममये तस्य राज्ये नापमृतिः क्वचित् । नैवाज्ञोल्लङ्घकः कश्चिद् शत्रुचौरभयं च न ॥ ४४७ ॥ अन्यदा तत्पुरोद्याने चतुर्ज्ञानमहर्द्धिभाक् । आगमद्धर्मघोषाह्वो गुरुः प्रौढपरिच्छदः ॥ ४४८ ॥ नियुक्तपुरुषेभ्यस्तज्ज्ञात्वा भूपो मुदाकुलः । राजन्यैर्नागरैश्चामा तं नन्तुं सप्रियोऽगमत् ॥ ४४९ ॥ स त्रिःप्रदक्षिणीकृत्य ववन्दे च गुरुं मुदा । धर्मलाभाशिषं सोऽपि ददौ श्रेयोरमाप्रुपम् ॥ ४५० ॥ शेषानपि मुनीन् नत्वा यथास्थानमुपाविशत् । भूपः संघश्चतुर्धा च गुरुर्धर्ममथादिशत् ॥ ४५१ ॥ तथाहि—

संप्राप्य दुष्प्रापमिदं नरत्वं धर्मे विधेयः सततं प्रयत्नः । यदैहिकामुष्मिकशर्मसंपदन्वेति तस्यापचयं चयं च ॥ ४५२ ॥ इहापि गेहे स्युरभीष्टसंपदः सुता विनीताः प्रणयी परिच्छदः । स्त्रियोऽनुकूलाः सुभगा धियो हृदि स्फुरन्ति धर्मादभितश्च कीर्तयः ॥४५३॥ राज्यं नदद्दन्तिगणं निधीन् वा दधन्न वा मर्त्यपतीन्दिरादि । जिनाधिपत्वं शिवसंपदश्च जिनेन्द्रधर्मस्य फलान्यमुत्र ॥ ४५४ ॥

अथो व्यजिज्ञपद् भूपः किमकारि मया प्रभो ! । सुकृतं प्राग्भवे येन राज्यपत्न्याद्यवाप्नवम् ॥ ४५५ ॥ जगौ गुरुः प्रृणूर्वीश ! पुण्यं वः प्राग्भवार्जितम् । आस्ते मणिमये देशे पुरी मणीवती वरा ॥ ४५६ ॥ नायकः सुस्थितस्तत्राभवद्बहुपरिग्रहः । श्रिया

वैश्रवणो यस्य पुरो वै श्रमणायते ॥ ४५७ ॥ चत्वारश्चतुरास्तस्याभवन् कर्मकरा वराः । सुन्दरो मन्दरश्चैव मङ्गलः सुभगस्तथा ॥ ४५८ ॥ तेषां पत्न्यः क्रमादासन्मदना सुन्दरी तथा । प्रियंवदा सुदामा च सर्वे प्रकृतिभद्रकाः ॥ ४५९ ॥ तत्राभूच्चन्दनः श्रेष्ठी परमार्हतमण्डनः । सोऽन्यदा कारयामासावासं बहुधनैर्नवम् ॥ ४६० ॥ यावद्वसति नाद्यापि मुहूर्तायोगतोऽत्र सः । तत्रागमन् शुचौ मासे तावत्सुव्रतसूरयः ॥ ४६१ ॥ तत्रावासे चतुर्मासीस्थित्यै श्रेष्ठी गुरूनिमान् । न्यमन्त्रयत ते भक्त्याऽप्यस्थुः शुद्धेऽर्हतीदृशः ॥ ४६२ ॥ धन्यंमन्यास्ततः पौरा गुरुसेवारताः सदा । षड्विधावश्यकोद्युक्ताः शृण्वाना धर्मदेशनाम् ॥ ४६३ ॥ वन्द्युद्घुष्टजयारावान् सङ्घार्चादानसुन्दरान् । उत्सवान् प्रत्यहं चक्रुर्धार्मिकीगीतमङ्गलान् ॥ ४६४ ॥ युग्मम् ॥ ज्ञात्वा तानन्यदा तत्र सुन्दरो द्रष्टुमागमत् । ववन्दे च गुरून् दृष्ट्वा वन्द्यमानान् महर्द्धिकैः ॥ ४६५ ॥ संजातकरुणास्तेऽपि समानतृपरङ्कुकाः । धर्मं धर्मफलं चास्याऽदिशन् विश्वहितावहम् ॥ ४६६ ॥ इच्छाश्च व्यवसायाश्च सुखायैवाखिलाङ्गिनाम् । धर्मस्यैवानुसारेण तच्च सेव्यः स एव तत् ॥ ४६७ ॥ नरदेवादिजन्तूनां नानाऽवस्थानिबन्धनम् । धर्म एवेत्ययं सेव्यो दुःखोद्विग्नैः सुखार्थिभिः ॥ ४६८ ॥ निशम्येत्याद्ययं बुद्धो जगौ धर्मार्थितां दधत् । प्रेष्यः शक्तोऽस्मि निर्वोढुं धर्मं यं तं दिश प्रभो ! ॥ ४६९ ॥ गुरुर्जगौ जिनो देवो नित्यं नम्योऽर्थितप्रदः । गुरुश्चरणवान् वन्द्यो धर्ममूलं स एव हि ॥ ४७० ॥ ध्येयः पञ्चनमस्कारः शीलं पाल्यं जनीं विना । भावी चतुर्गतिच्छेदोऽस्माच्चे धर्मचतुष्टयात् ॥ ४७१ ॥ मनोरमाः कामगुणाः प्रभुत्वं पृथ्व्याः समुद्रावधि दीर्घमायुः । रूपं यशश्चारु सुरेश्वरत्वं क्रमाच्छिवं चेति फलान्यमुष्य ॥ ४७२ ॥ जगौ स भव्यो भगवन्ननत्वा जिनं गुरुं चानुदिनं न भोक्ष्ये । ध्यास्याम्यहं पञ्चनस्कृतिं च सन्त्याम्यदोपं निजदारतोषम् ॥ ४७३ ॥ नियमचतुष्कमिदं स प्रतिपद्यापद्यपि प्रसृतसत्त्वः । अनुपालयन् प्रियायै फलान्वितं स्माह गुरुगदितम् ॥ ४७४ ॥ जातश्रद्धां तामपि गुरोः प्रपद्यानुपालयन्तीं तत् । दृष्ट्वाऽन्या अपि तिस्रो दास्यः पृष्ट्वा तथैवाऽलुः ॥ ४७५ ॥ दासीच-

तुष्कमेवं स कर्मकृत् सुन्दरश्च शुभभावात् । एतन्नियमचतुष्कं ररक्ष दक्षत्वतोऽन्यूनम् ॥ ४७६ ॥ ग्रामान्तरेऽन्यदाऽगात्स्वामिनिदेशाच्च सुन्दरः क्वापि । जिनमुनियोगाभावात् त्रिदिनीं चोपावसत्तत्र ॥ ४७७ ॥ तुर्यदिने गृहमेत्यानभ्यार्हन्तं मुनींश्च सोऽभुङ्क्त । तत्साहसं शशंसुः सर्वेऽप्यन्येऽनुकम्पार्द्राः ॥ ४७८ ॥ सुन्दर्याद्यास्ततस्तिस्रो जगदुर्मन्दरादिकान् । एतान् सुन्दरवद्धर्मान् न किं पालयथोत्तमाः ? ॥ ४७९ ॥ तेऽप्यूचुः पालने नैषां वयं नित्यं क्षमामहे । साहाय्यं त्वस्य दास्यामो धास्यामश्चान्तरान्तरा ॥ ४८० ॥ ददुस्तदादि साहाय्यं तस्य ते सानुमोदनाः । तद्धर्मविघ्नकृत्स्वाम्यादेशस्य कारणात्स्वयम् ॥ ४८१ ॥ सुन्दरस्यानुवृत्त्या च चक्रुः स्तानन्तरान्तरा । व्रतं स्वदारसंतोषं प्रत्यपद्यन्त तेऽपि च ॥ ४८२ ॥ तेषां पत्न्यस्तु तिस्रोऽपि धर्मैक्यादथ सुन्दरे । भक्तिरागं यथा बभ्रुर्न तथा स्वपतिष्वपि ॥ ४८३ ॥ धर्मरागो मिथस्त्वासीत्तासां चतसृणामपि । एवं पश्चापि ते धर्मचतुष्कं तदपालयन् ॥ ४८४ ॥ कालादायुःक्षये त्यक्त्वा भवं प्रेष्यस्य सुन्दरः । शुद्धपुण्यचतुष्कात्त्वमभू राज्यचतुष्कभृत् ॥ ४८५ ॥ मदनाद्याश्चतस्रोऽपि प्राक् स्नेहात्तेऽभवन् प्रियाः । कीर्तिमत्यादयोऽभीष्टाः समपुण्यप्रभावतः ॥ ४८६ ॥ मन्दराद्यास्त्रयस्ते च तव पुण्यानुमोदनात् । धर्मसाहाय्यदानाच्च सुहृदस्ते त्रयोऽभवन् ॥ ४८७ ॥ स्नेहः पूर्वभवाभ्यासात् सर्वेषामपि वोऽभवत् । प्राग्भवोपकृतादुच्चैस्त्वया ते प्रापिताः श्रियम् ॥ ४८८ ॥ स्वयंवरा राज्यरमाः समन्तात् प्रियाश्चतस्रो जगदुत्तमाश्च । सौन्दर्यधैर्यादिगुणाः प्रकृष्टा देवप्रसादः सततं च शर्म ॥ ४८९ ॥ नियमचतुष्कस्यैवं फलानि मत्वा महीपते ! स्वस्य । पत्नीनां सुहृदामपि कुरुष्व धर्मेऽर्हतो यत्नम् ॥ ४९० ॥ इह रोगादिनिदानं दुर्गतिदुःखौघकारणममुत्र । त्यक्त्वाऽतिकामसेवां भज धर्मं सर्वसुखमूलम् ॥ ४९१ ॥ श्रुत्वैवं नरनाथः पत्न्यः सुहृदश्च जातिसंस्मरणात् । मुदिता बुद्धाश्चोचुर्भगवन् ! सम्यग् भवद्वचनम् ॥ ४९२ ॥ स्वल्पादप्यव्यक्ताद् धर्माद्यदि नः फलं बभूवैवम् । तत्तं

विस्तरतो दिश बुद्ध्वा गृह्णीमहे येन ॥ ४९३ ॥ तत्तदनुग्रहहेतोर्यतिधर्मं दशविधं जगौ भगवान्। द्वादशधा गृहिधर्मं दर्शनमूलं च सुव्यक्तम् ॥ ४९४ ॥ ऊचुर्नृपादयोऽथो यतिधर्मे न प्रभो ! वयं शक्ताः। तदनुग्रहं विधाय श्राद्धानां देहि धर्मं नः ॥ ४९५ ॥ भगवानथ गृहिधर्मं विधिना दत्ते स्म तेऽपि तं विधिवत्। प्राप्य दधुः प्रमदभरं व्यजिज्ञपद्गुरुमथो नृपतिः ॥ ४९६ ॥ भगवन् ! कोऽहं भविता भवादतो भावि मे शिवं नो वा ?। गुरुराख्यत्स्वर्लोके भावी देवः सभार्यस्त्वम् ॥ ४९७ ॥ च्युत्वा ततो नृजन्मनि धर्मैः किर्मीरितं सुखं भुक्त्वा। गन्ताऽसि स्वः पुनरप्येवमितः सप्तमे नृभवे ॥ ४९८ ॥ भुक्त्वा राज्यं प्राप्य व्रतं कृताशेषकर्ममलघातः। प्राप्स्यसि शिवशर्म त्वं सह पत्नीभिः सहानन्दः ॥ ४९९ ॥ युग्मम् ॥ सुहृदोऽप्यार्हताद्धर्मात्क्रमात्सम्यगुपासितात्। भवैः कतिपयै राजन् ! प्राप्स्यन्ति शिवसंपदम् ॥ ५०० ॥ श्रुत्वेति भूपः ससुहृत्सभार्यः पौराश्च धर्मान् विविधान् प्रपद्य। गुरुं प्रणम्याप्तकृतार्थभावा यथागतं स्वस्वमगुर्निवासम् ॥ ५०१ ॥ सुश्राद्धधर्मं सुचिरं प्रपाल्य प्रभाव्य तीर्थं बहुधा सभार्यः। काले दिवं प्राप्य नृपो गुरूक्त-क्रमेण नैःश्रेयसमाप शर्म ॥ ५०२ ॥ एवं नमञ्जिनमुनीन् परमेष्ठिमन्त्रं ध्यायन् सृजंश्च सततं निजदारतोषम्। राज्यादिसंपदमवाप्य परां क्रमेण प्राप्नोति मुक्तिमपि कर्मजयश्रियाढ्यः ॥ ५०३ ॥ वेदाष्टमनुमितेऽब्दे १४८४ मुनिसुन्दरसूरिभिः सुमुखवृत्तम्। भव्यानुग्रह-हेतोः श्रेयःप्राप्त्यै व्यधायीदम् ॥५०४॥ शब्दानुशासने दक्षो लक्ष्मीभद्रमुनिर्मुदा। कथा एताश्चतस्रोऽपि गुरुभक्तेरशोधयत् ॥५०५॥

॥ इतिश्रीजिनमुनिनमननमस्कारगुणनस्वदारसंतोषफले सुमुखनृपादिमित्रचतुष्ककथा ॥
जगत्प्रसिद्धश्रीबृहत्तपागच्छमण्डन–श्रीदेवसुन्दरसूरि–श्रीज्ञानसागरसूरिशिष्यैः
श्रीसोमसुन्दरसूरिपट्टप्रतिष्ठितैः श्रीमुनिसुन्दरसूरिभिः कृता ॥

॥ ग्रन्थाग्रम् १४५० ॥

॥ समाप्तमिदं चन्द्रवीरशुभादि--कथाचतुष्टयम् ॥